द्रव्यार्थिकविवक्षया तथैव शाब्दबोधात्, घटो रूपादय एवेति पर्यायार्थविवक्षया च तथैव शाब्दबोधात्। यदा तु द्रव्य-पर्यायनययोरेकत्व-बहुत्वाभ्यां नोद्देशो नवा विधानम्, किन्तु तदुपरागेण सत्त्वादेव प्रतिपिपादयिषितम्, तदा ताभ्यां 'घटोऽस्ति', 'रूपादयः सन्ति' इत्येवाभिलापः। यदा तूभयगोचरयोर्धर्म-धर्मिभावेन प्रतिपिपादयिषा, तदा

बहुत्वेन तद्बोध इति घट एव इत्यत्रैवकारेण घटस्य प्राधान्यं ज्ञायते, घटो रूपादय एव इत्यत्रैवकारेण रूपादीनां प्राधान्यं ज्ञायते, एवं च घटस्य प्राधान्ये तद्गतैकत्वमेव विवक्षितमेकवचनेनोपस्थाप्यत इत्येकत्वबोधः रूपादीनां प्राधान्ये तद्गतबहुत्वमेव विवक्षितं बहुवचनेनोपस्थाप्यत इति बहुत्वबोध इत्याशयः। एकत्व बहुत्वादीनां कदाचिन्न भवत्यपि बोध इत्यावेदयति-यदा त्विति। नोद्देश -एकत्वं बहुत्वं चोद्देश्यतावच्छेदकीकृत्य न किमपि धर्मान्तरं विधीयते। नवा विधान धर्मान्तरमुद्देश्यतावच्छेदकीकृत्य तद्विशिष्टेनैकत्वस्य बहुत्वस्य वा विधानम्। तदुपरागेण तद्गुणभावेन, एकत्वादयो वस्तुनि विद्यन्ते, एकवचनादिविभक्तिविनिर्मोकेण केवलप्रकृतेरप्रयोक्तव्यत्वान्नार्थो बोध्यत इति विभक्तिप्रयोगस्यावश्यकत्वे सार्थकत्वे सति निरर्थकत्वस्याऽन्याय्यतयाऽर्थोऽपि तस्या भासत एव परं न तत्र नयतात्पर्यमित्यावेदयितुं 'तदुपरागेण' इत्युक्तम्। 'सत्त्वादेः' इत्येवकारेणैकत्वादेः प्रतिपिपादयिषितत्वव्यवच्छेदः। ताभ्यां द्रव्य-पर्यायनयाभ्याम्, द्रव्यनयस्यापि सत्त्वमेव घटे प्रतिपिपादयिषितं न रूपादीनां तदन्तर्भावः, पर्यायनयस्यापि सत्त्वमेव पर्याये प्रतिपिपादयिषितं न [illegible] द्रव्यस्य पर्यायस्वरूप एव सन्निवेशः, अत एव चैकत्वबहुत्वयोरविवक्षा, अर्थस्वाभाव्यात् तु तद्भानमित्याशयः। उभयगोचरयो-द्रव्य-पर्यायनय विषययोर्घट रूपाद्योः। धर्म-धर्मिभावेन रूपादेर्धर्मभावेन घटस्य धर्मिभावेन, इत्थं च द्रव्यार्थिकविवक्षया घट एव रूपादय इति, पर्यायार्थिकविवक्षया घटो रूपादय एवेति, द्रव्यार्थिकनयेन द्रव्ये

घटस्य रूपादय इत्येवाभिलापः । अवच्छेदकविनिर्मोकेनैकत्र बहुत्वं त्वनुशासनोपग्रहेणैव नयः प्रकाशयतीति नैकघटादौ 'घटाः' इत्यादिप्रयोगापत्तिः । साधुत्वभ्रान्त्या जायमानज्ञाने च विषयाबाधरूपप्रामाण्यसत्त्वेऽपि स्वावच्छेदकधर्मानवधारणेन स्व-परव्यवसायित्वलक्षणं न

---

सत्त्वस्य पर्यायार्थिकनयेन पर्याये सत्त्वस्य विवक्षया तु घटोऽस्ति, रूपादयः सन्तीति, धर्म-धर्मिभावेन विवक्षया घटस्य रूपादय इत्येवमभीष्टाः प्रयोगा भाविताः । इदानीं यदर्थमयं विचार उपदर्शितस्तमधिकृत्याऽऽह-अवच्छेदकेति-एकं घटमुद्दिश्य घटा इति प्रयोगस्य दोषपरत्वेन द्रव्यात्मनैकस्यापि पर्यायात्मना बहुत्वमिति कृत्वेति पर्यायात्मत्वं बहुत्वावच्छेदकं तदभिलापकस्यापि तत्प्रयोगप्रसङ्गे, अथवा "दाराः पुंसि च भूम्न्येव" इति यथाऽनुशासनं तथैकघटवाचकस्यापि घटशब्दस्य बहुवचनान्तत्वानुशासनं भवेत्, अवच्छेदकविनिर्मोकेऽनुशासनाभावे चैकत्वप्रतिपादकैकवचनप्रयोगस्यैव स्वरसतः प्राप्तत्वाद् बहुवचनप्रापकानुशासनाभावाच्च घटा इति प्रयोगापत्तिः, अप्-दारादिशब्दानां नियतबहुवचनानुशासनस्यैकत्वेऽपि बहुवचनस्यैव प्राप्तेर्नैकवचनापत्तिः, एकस्मिन् मनुष्ये पर्यायार्थतो बहुत्वस्य सद्भावेऽपि तदवच्छेदकावबोधकवचनसंनिवेशाभावादनुशासनाभावाच्च न मनुष्या गच्छन्तीति प्रयोगः । ननु भवतु एकत्र घटे घटा इति प्रयोगस्यासाधुत्वं परं तत्र पर्यायार्थिकनयादेशाद् बहुत्वस्य भावेन घटविशेष्यकबहुत्वप्रकारकज्ञानस्य विषयाबाधतः प्रामाण्यं स्यादित्यत आह-साधुत्वभ्रान्त्येति-यत्र प्रामाणिकानां साधुत्वाभावनिश्चयस्तद्वाक्यं प्रामाणिकैर्न प्रयुज्यते, प्रयुज्यमानमपि वा वाक्यमसाधुत्वग्रहप्रयुक्तानाप्तोक्तत्वज्ञानविषयीकृतं न स्वविषयीभूतेऽर्थे यथार्थज्ञानमाधातुमलम्, यत्र पुनः साधुत्वभ्रमात् तत् प्रमाणमप्रमाणं वा भवतु तत्सहकृताद् वाक्याच्छाब्दबोधो जायत एव, प्रकृते साधुत्वभ्रान्त्या तत्सहकृताद् वाक्याज्जायमाने ज्ञाने विषया-

प्रामाण्यम् । घटस्य रूपादय इत्येकदैवैकवचन-बहुवचनप्रयोगः, अत एव शबलरूपत्वे कथमेकतरप्रतिपत्तिरिति परास्तम् । सन्निकर्ष-विप्रकर्षादिवशाद् यथाक्षयोपशमं

---

वाच्यलक्षणप्रामाण्यसत्त्वेऽपि घटे बहुत्वस्य रूपादिसमुदितस्वरूपत्वलक्षणसमवच्छेदकं तस्य घटा इत्येतावन्मात्रप्रयोगेऽनवधृततयेन तदवच्छेदकबहुत्वस्यानवधृतत्वेन स्वपरव्यवसायित्वलक्षणं प्रामाण्यं यत् स्याद्वादसिद्धान्तिनं तत् तत्र न स्यादेवेत्यर्थः । यत्र च वाच्ये एकत्व-बहुत्वावच्छेदकावच्छेदकद्वयघटितत्वं तत्रावच्छेदकलक्षणनिमित्तभेदत एकदैवैकत्वबहुत्वबोधस्य तद्वाक्यतः सम्भवेन तद्घटकतयैकवचन-बहुवचनप्रयोगोऽप्युपपद्यत एवेत्याह-घटस्येति-अत्र घटात्मकद्रव्य-सम्बन्धितया रूपादयः पर्यायाः प्रतीयन्ते, द्रव्य पर्याययोश्च कथञ्चित् तादात्म्यलक्षणाभिसम्बन्धाय एव सम्बन्धोऽवभासत इति द्रव्यपर्यायोभयात्मकं वस्त्वेतद्वाक्येन प्रतीयते तत्र वस्तुनि घटत्वलक्षणावच्छेदेनैकत्वप्रतिपत्तये घटस्येत्येकवचनं रूपाद्यनुगतपर्यायत्वावच्छेदेन बहुत्वप्रतिपत्तये रूपादय इति बहुवचनमित्येकवस्तुगततयैकत्व-बहुत्वयोः प्रतिनियतावच्छेदकावच्छेदेन बोधकवाक्यघटकतयैकवचन-बहुवचन-प्रयोग उपपन्न इत्यर्थः । अत एव प्रतिनियतनिमित्तावच्छेदेनैकत्र धर्मिणि विरुद्धानेकधर्मप्रतिपत्तेरुपपन्नत्वादेव, अस्य 'परास्तम्' इत्यनेन सम्बन्धः शबलरूपत्वे वस्तुनोऽनेकधर्मात्मकत्वाच्चित्रस्वरूपत्वे । कथं केन प्रकारेण, तादृशप्रकारमुपदर्शयितुमशक्यत्वान्न कथञ्चिदित्याक्षेपः । एकतरप्रतिपत्तिः प्रतिनियतैकधर्मेण वस्तुप्रतिपत्तिः । स्वस्वनिमित्तलक्षणप्रतिनियतावच्छेदेनैकधर्मप्रतिपत्तिः सुतरामेवेत्यभिसन्धानेन अत एवेति निर्दिष्टमेव हेतुमुपदर्शयति-सन्निकर्षेति-यद्यप्यनन्तधर्मात्मके वस्तुनि सर्वेऽपि तन्नत्यधर्माः कथञ्चित्तादात्म्यलक्षणसम्बन्धमुपसर्पन्त एव, तथापि यस्य धर्मस्य यदेष्टसाधनतावच्छेदकतया प्रतिसन्धानं तदा तस्य बुद्धिस्थत्वात् सन्निकृष्टत्वम्, यस्य च धर्मस्य सतोऽप्यभिमतकार्ये नोपयोगस्तदा तस्य बुद्धिस्थत्वा-

**द्रव्य-पर्यायप्रधानभावेनाप्रधानगुणभूतेऽपि वस्तुनि सत्त्व-घटत्वादिप्रतिपत्तेः, तदिदमुक्तम्—"अर्पितानर्पितसिद्धेः"**

भावाद् विप्रकृष्टत्वेत्येवं सन्निकर्ष-विप्रकर्षादिवशादित्यर्थः, आदिपदात् प्रकरणादेः परिग्रहः। क्षयोपशम द्रव्यपर्यायाद्यभिलषितप्रतिनियत-धर्मविषयकज्ञानावरणीयकर्मक्षयोपशमानतिक्रमेण। द्रव्य-पर्यायप्रधानभावेन प्राधान्येन द्रव्यविषयकज्ञानावरणीयकर्मक्षयोपशमे सति द्रव्यप्रधान-भावेन, प्राधान्येन पर्यायविषयकज्ञानावरणीयकर्मक्षयोपशमे सति पर्यायप्रधानभावेन, अस्य 'सत्त्वघटत्वादिप्रतिपत्त' इत्यनेनान्वयः। अप्रधान-गुणभूतेऽपि वस्तुनीति—यत्र च धर्मद्वयमध्ये एकस्य गुणभावस्तत्रा-परस्य प्राधान्यम्, प्राधान्य-गौणयोरन्योन्यापेक्षया व्यवस्थितेः, वस्तुनि तु सर्वेऽपि धर्मा वस्तुस्थित्या समकक्षा एवेति न सर्वैकस्य गुणभावोऽपरस्य प्रधानभाव इत्यतस्तथाभूतधर्मात्मकवस्त्वप्यप्रधान-गुणभूतमेवेति तथेत्यर्थः। उक्तार्थं तत्त्वार्थसम्मतिं दर्शयति—तदिद-मुक्तमिति। अर्पितानर्पितसिद्धेरिति—एतच्च सूत्रं वृत्तौ व्याख्यातम्, यथा—"अनेकधर्मा धर्मी, तत्र प्रयोजनवशात् कदाचित् कश्चिद् धर्मो वचनेनार्प्यते विवक्ष्यते, तन्नापि च कश्चिन्न विवक्ष्यते प्रयोजना-भावात्, न पुनः स धर्मी विवक्षितधर्ममात्र एव, इत्यतः सत्पर्याय-विवक्षायां सदुत्पादादि, स्थिरांशविवक्षायां नित्यम्, असदनुत्पा-दाद्यनित्यं च, सत्त्वासत्त्वविशिष्टग्रहणात् सर्वथा वस्तुनः" इत्यादि, अनेन व्याख्यानेनेत्थमर्थोऽध्यवसितः—यद्धर्मविवक्षा स धर्मोऽर्पितः, तेनार्पितेनाऽनर्पितस्याविवक्षितस्य सिद्धिः, यस्य धर्मस्य विवक्षा तस्य साक्षादुपात्तत्वात् साक्षादेव तद्ग्रहणमिति तस्य प्रधान-भावेन सिद्धिः, [redacted] च धर्मो नानर्पितधर्मविकलः सम्भवतीति अन-र्पितधर्मविशिष्ट एवार्पितधर्म इति तत्सिद्धिर्गुणभावेनानर्पितमपि गृह्णात्येवेत्यनेकान्तवस्तुसिद्धिरित्युक्तसूत्रतात्पर्यम्। एतद्ग्रन्थहार्द-रचितरत्नप्रभालोकः सम्भाव्यते, एवमिदानीं स नास्माकं दृष्ट-पथमवतरति, तत्र चानेकान्ततत्त्वव्यवस्थितिसंवेदिना; तदवगंत

[तत्त्वार्थ० अ० ५ सू० ३१] इति, अधिकं त्रिसूत्र्यालोके। द्वौ मूलभेदौ– द्रव्यार्थिकः पर्यायार्थिकश्च। तत्र 'द्रव्यमात्रग्राही नयो द्रव्यार्थिकः', अयं हि द्रव्यमेव तात्त्विकमभ्युपैति, उत्पाद-विनाशौ पुनरतात्त्विकौ, आविर्भाव-तिरोभावमात्रत्वात्। 'पर्यायमात्रग्राही पर्यायार्थिकः', अयं

---

जिवासूत्र मित्याह–अधिकं त्रिसूत्र्यालोक इति। इत्थं व्यवस्थितेऽनेकान्ततत्त्वे प्रमाणविषये तदंशस्य द्रव्यस्य पर्यायस्य वा ग्राही भवति नय इति व्यवस्थितम्। तं विभजते–द्वावित्यादिना–द्रव्यार्थिक-पर्यायार्थिकभेदेन नयो द्विविध इत्यर्थः। मूलभेदावित्युक्त्या नैगमसङ्ग्रहादयो नयभेदाः सर्वेऽप्यनयोरेवान्तर्भवन्तीति दर्शितम्। तत्र द्रव्यार्थिकपर्यायार्थिकयोर्मध्ये। द्रव्यमात्रग्राही नय इति लक्षणम्, द्रव्यार्थिक इति लक्ष्यम्, यो नयो द्रव्यं गृह्णाति स पर्यायं न गृह्णात्येवेति 'द्रव्यग्राही' इत्युक्त्यापि सामञ्जस्ये मात्रपदं स्वरूपाख्यानाय एव नातिव्याप्त्यादिव्यवच्छित्तये, 'नयः' इत्युपादानादेव प्रमाणेऽतिव्याप्तिनिरासादिति बोध्यम्। द्रव्यमात्रग्राहित्वमेव द्रव्यार्थिकस्योपपादयति अय हीति-हि यतः, अयं द्रव्यार्थिकनयः। द्रव्यमेव स्थैर्यमेव, उत्पादव्ययध्रौव्यात्मकं वस्तु स्याद्वादसिद्धान्तिनाम्, तत्र द्रव्यार्थिकनयो ध्रौव्यमेव तात्त्विकमभ्युपैतीत्यर्थः। यद्युत्पादविनाशावेतन्नये न तात्त्विकौ तर्हि घटाद्युत्पादनाय मृद्दण्डचक्रचीवरादिसामग्रीसम्पादनं घटादिविनाशाय घटाद्युपरि मुद्गरादिनिपातनमकिञ्चित्करमेव स्यादित्यत आह–आविर्भावतिरोभावमात्रत्वादिति–घटादीनां मृद्द्रव्यात्मना सर्वदा सत्त्वमेव, न तु पूर्वमभूत्वा भवनमुत्पाद एतन्नये, किन्तु पूर्वं मृदात्मना सत एव घटादेर्मृद्दण्डादिसामग्रीत आविर्भावः। स एवास्योत्पादः, एवं मुद्गरपाताद्यनन्तरं न सर्वथाऽभावलक्षणविनाशो घटादेः किन्तु तिरोभाव एव, तस्यैव च विनाशव्यवहारगोचरत्वम्, तिरोभाव एव च विनाशः, इत्थं चोत्पादकसामग्र्या आविर्भावमात्रस्य

स्तूत्पाद-विनाशपर्यायमात्राभ्युपगमप्रवणः, द्रव्यं तु सजातीयक्षणपरम्परातिरिक्तं न मन्यते, तत एव प्रत्यभिज्ञाद्युत्पत्तेः। न चैवमितरांशप्रतिक्षेपित्वाद् दुर्नयत्वम्, तत्प्रतिक्षेपस्य प्राधान्यमात्र एवोपयोगात्, एतद्विषयविस्तरस्तु नात्राभिधीयते ग्रन्थान्तरप्रसङ्गात्।

---

विनाशसामग्रीतस्तिरोभावमात्रस्य नोत्पादविनाशौ वास्तविकाविस्यर्थः। पर्यायमात्रग्राहीति लक्षणं पर्यायार्थिक इति लक्ष्यम्, वस्तुग्राहिणः प्रमाणस्य वस्त्वंशग्राहित्वमपीति तत्रातिव्याप्तिवारणाय मात्रपदम्, लक्षणभागे 'नय' इत्युक्तौ च तत एव च प्रमाणातिव्याप्तिवारणे मात्रपदं स्वरूपोपरञ्जकज्ञापकमेवेति बोध्यम्। एतन्नयस्य पर्यायमात्रग्राहित्वं भावयति-अयं हीति हि यतः, अयं पर्यायार्थिकः। अन्यस्य ध्रौव्यलक्षणद्रव्यानभ्युपगन्तृत्वे ध्रौव्यावगाहिप्रतीतेः कथमुपपत्तिरित्यत आह-तत एव प्रतिक्षणमन्यदन्यदेव वस्तु भवति, सजातीयत्वादस्याश्च पूर्वापरक्षणयोर्भेदो नावभासते, भेदानवभासनादेव सजातीयक्षणपरम्परैव पूर्वापरभेदेनानध्यवसिता स्थिरमिव प्रतीयते। अतः सैव ध्रौव्यं न तु तद्व्यतिरिक्तं द्रव्यमेकं वस्तुभूतं समस्तीत्येवं पर्यायार्थिकनयो मन्यते, सजातीयक्षणपरम्परातिरिक्तं द्रव्यं न मन्यते इत्येतावता सजातीयक्षणपरम्परारूपं द्रव्यं मन्यत इत्यायातमेवेति बोध्यम्। तत एव-सजातीयक्षणपरम्परालक्षणद्रव्यरूपविषयादेव। प्रत्यभिज्ञाद्युत्पत्ते-सोऽयं घट इत्यादिप्रत्यभिज्ञादिसम्भवात्, आदिपदाद् घटध्रौव्यव्यवहारादेरुपग्रहः। ननु द्रव्यार्थिकनयो यथोत्पाद-व्ययौ तात्त्विकौ नाभ्युपगच्छति, पर्यायार्थिकश्च ध्रौव्यमितीतरांशप्रतिक्षेपित्वविशेषणस्योपात्तत्वान्नयलक्षणाक्रान्तत्वमपि न स्यादित्याशङ्क्य प्रतिक्षिपति-न चेति-'द्रव्यमात्रग्राही' इत्यस्य प्राधान्येन द्रव्यमात्रग्राहीत्यर्थः, तथा च द्रव्यार्थिकनयः प्राधान्येन द्रव्यमेवाभिमन्यते इत्यतः प्राधान्यमेव पर्याये नाभ्युपैति गौणतया तु

आद्यस्य चत्वारो भेदाः–"नैगमः, सङ्ग्रहः, व्यवहारः, ऋजुसूत्रश्च" इति जिनभद्रगणिक्षमाश्रमणप्रभृतयः। ऋजुसूत्रो यदि द्रव्यं नाभ्युपेयात् तदा "उज्जुसुअस्स एगे अणुवउत्ते एगं दव्वावस्सयं पुहत्तं णेच्छइ" त्ति सूत्रं विरुध्येत।

"ऋजुसूत्रवर्जास्त्रय एव द्रव्यार्थिकभेदाः" इति तु वादिनः सिद्धसेनस्य मतम्। अतीताऽनागत-परकीयभेद-

पर्यायमपि स्वीकरोतीति नेतरांशप्रतिक्षेपित्वमस्य। एवं पर्यायार्थिकेऽपीत्याह-तत्प्रतिक्षेपेणेति-इतरांशप्रतिक्षेपस्येत्यर्थः। ग्रन्थान्तरे एतद्विषयविचारो विस्तरतः, अत्रापि तथाविचारे ग्रन्थान्तरस्यैवं प्रसङ्गानुप्रसङ्गतो निर्मितिः कृता भवेदिति ग्रन्थान्तरसाध्ये विस्तृतविचारे नायासो विधीयत इत्याह-एतद्विषयविस्तरस्त्विति। अत्र नयरहस्याभिधेऽस्मिन् ग्रन्थे। 'नाभिधीयते' इत्युक्त्यापि निर्वाहे 'अत्र' इत्युक्तिः, नयरहस्यमात्राधिकस्य संक्षिप्तशरीरस्यास्य ग्रन्थस्य एतद्विषयविस्तरविचारसार्थायभासकसन्दर्भगर्भत्वे सूक्ष्मशरीरत्वाभावतोऽप्रतिज्ञातग्रन्थान्तरतैव स्यान्न तु प्रतिज्ञातार्थनिर्वाह इत्यावेदनाय।

आद्यस्य द्रव्यार्थिकनयस्य। नैगमसङ्ग्रहव्यवहारा द्रव्यार्थिकभेदा इत्यन्येऽभ्युपगच्छन्ति, पूज्यमते ऋजुसूत्रस्यापि द्रव्यार्थिकत्वमिति विशेषस्तत्र युक्तिमुपदर्शयति-ऋजुसूत्रो यदीति। उज्जुसुअस्सेति-"ऋजुसूत्रस्य एकोऽनुपयुक्त एकं द्रव्यावश्यकं पृथक्त्वं नेच्छति" इत्यस्मिन् सूत्रे एकद्रव्यावश्यकस्याभ्युपगमाद् द्रव्यार्थिकत्वं पृथक्त्वानभ्युपगमान्न पर्यायार्थिकत्वमिति स्पष्टं प्रतीयते, तच्च तस्य द्रव्यार्थिकत्वानभ्युपगमे पर्यायार्थिकत्वाभ्युपगमे च विरुध्येतेति सूत्रविरोधभयात् पूज्यमतमभ्युपेयमिति। सिद्धसेनमते नैगम-सङ्ग्रह-व्यवहाराख्यो द्रव्यार्थिकस्य भेदा इत्याह-ऋजुसूत्रवर्जा इति। उक्तसूत्रविरोधपरिहाराय वादिदिवाकरमतं परिष्करोति-अतीतेति-तथा

पृथक्त्वपरित्यागाद् ऋजुसूत्रेण स्वकार्यसाधकत्वेन स्वकीयवर्तमानवस्तुन एवोपगमात्, नास्य तुल्यांश-ध्रुवांशलक्षणद्रव्याभ्युपगमः, अत एव नास्पाऽसद्घटितभूत-भाविपर्यायकारणत्वरूपद्रव्यत्वाभ्युपगमोऽपि । उक्तसूत्रं त्वनुयोगांशमादाय वर्तमानावश्यकपर्याये द्रव्यपदोपचारात् समाधेयम्, पर्यायार्थिकेन मुख्यद्रव्यपदार्थस्यैव

योक्तसूत्रे 'पृथक्त्वं नेच्छति' इत्यस्य न सामान्यतो भेदं नेच्छतीत्यर्थो, येन पर्यायार्थिकेऽप्यभेदानभ्युपगमात् पर्यायार्थिकत्वमेवास्य न भवेत्, किन्तु अतीतानागतपरकीयभेदलक्षणं यत् पृथक्त्वं तदेव नाभ्युपगच्छति तन्मते वर्तमानक्षणमात्रस्थायि वस्तुन्यतीतानागतयोरभावात् तदात्मकभेदाभावः, परेण सह नास्ति कश्चित् सम्बन्ध इति परकीयभेदाभावः । उक्तभेदानभ्युपगन्त्रा तेन किमभ्युपेयत इत्यपेक्षायामाह–स्वधर्मभावमवेनेति । तिर्यक्सामान्योर्ध्वतासामान्यलक्षणद्रव्याभ्युपगमे सत्येव द्रव्यार्थिकत्वम्, तच्चास्य नास्तीत्याह–नास्येति । अस्य ऋजुसूत्रस्य, एवमग्रेऽपि । अत एव तुल्यांश-ध्रुवांशलक्षणद्रव्याभ्युपगन्तृत्वाभावादेव । यो हि अनुभूतराजपर्यायो वर्तमाने राज्यमकुर्वाणोऽपि द्रव्यतो राजेत्युच्यते, योऽपि च भविष्यति राजा सोऽपि भाविराजपर्यायकारणत्वाद् द्रव्यतो राजेत्युच्यत इति भूतपर्यायकारणं भविष्यत्पर्यायकारणं च द्रव्यम्, तादृशकारणत्वलक्षणद्रव्यत्वमपि नैव ऋजुसूत्रोऽभ्युपगच्छतीत्याह–नास्येति–वर्तमानकाले भूतोऽप्यसन् भाव्यप्यसन् इति तादृशपर्यायनिरूपितकारणत्वरूपद्रव्यत्वमपि वर्तमानकालानवच्छिन्नत्वादसदिति न ऋजुसूत्राभ्युपगमविषयः । तर्हि उक्तसूत्रे द्रव्यावश्यकमित्युक्तेः का गतिरित्यपेक्षायामाह–उक्तसूत्र त्विति । वर्तमानावश्यकपर्याये द्रव्यत्वमौपचारिकमेव न वास्तविकमिति तथाविधद्रव्याभ्युपगन्तृत्वेऽप्यस्य न पर्यायार्थिकत्वहानिरित्याह–पर्यायार्थिकेनेति–प्रनिक्षेपादित्यन्तमेका पङ्क्तिका ।

प्रतिक्षेपात्, अध्रुवधर्माधारांशद्रव्यमपि नास्य विषयः शब्दनयेऽप्यतिप्रसङ्गादित्येतत्परिष्कारः ।

पर्यायार्थिकस्य त्रयो भेदाः—"शब्दः, समभिरूढः, एवम्भूतश्च" इति सम्प्रदायः । "ऋजुसूत्राद्याश्चत्वारः" इति तु वादी सिद्धसेनः । तदेवं सप्तोत्तरभेदाः । शब्दपदेनैव साम्प्रत-समभिरूढैवम्भूतात्मकनयभेदत्रयोपसङ्ग्रहात् पञ्चेत्यादेशान्तरम् । ते च प्रदेश-प्रस्थक-वसतिदृष्टान्तैर्यथाक्रमं शुद्धिभाजः । तथाहि—नैगमनयस्तावद् धर्मांऽध-

अध्रुवेति—अनित्या ये धर्मास्तदाधारांश एव द्रव्यम्, तदपि न ऋजुसूत्रस्य विषयो येन तद्विषयत्वेन द्रव्यार्थिकत्वमस्य स्यात्, तद्विषयत्वमभ्युपेत्य तस्य द्रव्यार्थिकत्वाभ्युपगमे ऋजुसूत्रविषय एव सूक्ष्म-सूक्ष्मतर-सूक्ष्मतमपर्यायविशुद्धिमपेक्ष्य साम्प्रत-समभिरूढैवम्भूताख्यास्त्रयोऽपि शब्दनयाः प्रवर्तन्त इति तेष्वपि द्रव्यार्थिकत्वं स्यादित्याह—शब्दनयेऽपीति । एतत्परिष्कारः सिद्धसेनमतपरिष्कारः ।

सम्प्रदाय इति—जिनभद्रगणिक्षमाश्रमणप्रभृतीनां मतमित्यर्थः । ऋजुसूत्र-शब्द-समभिरूढैवम्भूताश्चत्वारः पर्यायार्थिका इति सिद्धसेनमतमित्याह—ऋजुसूत्राद्या इति । द्रव्यार्थिकपर्यायार्थिकयोरवान्तरभेदसमाकलने नैगमसङ्ग्रहव्यवहारर्जुसूत्रशब्दसमभिरूढैवम्भूताः सप्त नया इत्युपदर्शयति—तदेवं सप्तोत्तरभेदा इति । केचन आचार्याः साम्प्रत-समभिरूढैवम्भूतनयानां शब्दनयत्वेनैकीकृत्य नैगम-सङ्ग्रह-व्यवहारर्जुसूत्र-शब्दनया इत्येवं पञ्च नया इत्युपदिशन्ति, तन्मतमुपदर्शयति—शब्दपदेनैवेति । नैगमादिषु नयेषु पूर्वपूर्वनयापेक्षयोत्तरोत्तरनयानां शुद्धिभरस्त्वमित्याह—ते चेति—अनन्तरोपदर्शिता नया पुनरित्यर्थः । तत्र प्रदेशदृष्टान्तेन शुद्धिप्रकर्षं भावयति—तथाहीति । 'नैगमनय' इत्यस्य 'आह' इत्यनेन सम्बन्धः । स्कन्धपदेन स्कन्धात्मकपुद्गलग्रहणम्, परमाण्वारब्ध-

र्माऽऽकाश-जीव-स्कन्धानां तद्देशस्य चेति षण्णां प्रदेशमाह।

देश-प्रदेशौ नातिरिच्येते, "दासेन मे [खरः क्रीतो, दासो मम खरोऽपि मे]" इत्यादिन्यायाद् देशस्य स्वीयत्वेन तत्प्रदेशस्यापि स्वीयत्वाव्यभिचारात् पञ्चानामेव प्रदेश इति सङ्ग्रहः।

व्यवहारस्त्वाह–पञ्चानां प्रदेशस्तदा स्याद् यदि साधा-

पुद्गलस्य स्वयं प्रदेशरूपतया तद्देश प्रदेशयोरभावात्, कालस्तु परमनिरुद्धैकसमयरूप इति तस्यापि न देश प्रदेशाविति बोध्यम्। तद्देशस्य धर्माऽधर्माऽऽकाश-जीव-स्कन्धदेशस्य। षण्णा धर्माऽधर्माऽऽकाश-जीव स्कन्धतद्देशानाम्, नैगमनय षण्णां प्रदेशमिच्छति।

सङ्ग्रहस्तु धर्माऽधर्माऽऽकाश-जीव स्कन्धानां पञ्चानामेव प्रदेशमिच्छति धर्मदेशस्य धर्मीयत्वेन धर्मदेशप्रदेशस्यापि धर्मप्रदेशत्वाद्, एवमधर्मदेशप्रदेशादेरप्यधर्मादिप्रदेशत्वादित्याह–देश प्रदेशाविति–धर्मादितो धर्मादिदेशोऽतिरिक्तस्ततो धर्मादिदेशप्रदेशोऽतिरिक्त इत्येव देश प्रदेशौ विभिन्नौ न, किन्तु धर्मादिदेशानां धर्मादिसम्बन्धिनां प्रदेशस्य धर्मादिप्रदेशत्वमेव। एतदेव दृष्टान्तावष्टम्भेन भावयति–दासेनेति। देशस्य धर्मादीनां देशस्य। स्वीयत्वेन धर्मादिसम्बन्धित्वेन। तत्प्रदेशस्यापि धर्मादिदेशसम्बन्धिप्रदेशस्यापि। स्वीयत्वाव्यभिचाराद् धर्मादिसम्बन्धित्वनियमात्। पञ्चानामेव धर्माऽधर्माऽऽकाश-जीव स्कन्धानामेव, एवकारेण तद्देशस्य व्यवच्छेदः।

तत्र व्यवहाराभिप्रायं दर्शयति–व्यवहारस्त्वाहेति–यस्यैकस्यानेकसम्बन्धित्वं तस्यैव साधारणस्यानेकसम्बन्धितया व्यपदेशो व्यवहारपथमवतरति, यथा–एकं हिरण्यं बहुमूल्यं पञ्चानां धनमविभक्तं तस्य पञ्चसम्बन्धित्वव्यपदेशः, प्रदेशस्तु यो धर्मस्य तदन्य एवाधर्मस्य, ततोऽन्य एवाकाशस्य, तस्मादन्य एव च जीवस्य, ततो व्यतिरिक्त एव च स्कन्धस्येति नैकस्मिन् प्रदेशे धर्मादीनां सम्बन्धित्वमिति

रणः स्यात्, यथा–"पञ्चानां गोष्ठिकानां हिरण्यम्" इति, प्रकृते तु प्रत्येकवृत्तिः प्रदेश इति पञ्चविधः प्रदेश इति भणितव्यम्। नन्वेवं घटपटयो रूपमित्यपि न स्यात्, द्वित्वाश्रयवृत्तित्वबोधे तयोर्घटरूपमित्यस्याप्यापत्तेः, द्वि-

पञ्चानां प्रदेश इति व्यपदेशो न सम्भवति, किन्तु धर्मस्य प्रदेशः, अधर्मस्य प्रदेशः, आकाशस्य प्रदेशः, जीवस्य प्रदेशः, स्कन्धस्य प्रदेश इत्येवं पञ्चविधः प्रदेश इति वक्तव्यमिति समुदितार्थः। साधारणं पञ्चानां सम्बन्धी एकप्रदेशः। स्याद् भवेत्। गोष्ठिकानाम्–एकां गोष्ठीं सभामालम्ब्य स्थितानां जनानामेकद्यूतादिव्यवहारिणाम्। प्रकृते तु धर्मास्तिकायादिप्रदेशविचारे तु। प्रत्येकवृत्ति–एकैकमात्रसम्बन्धी। इति एतस्मात् कारणात्। ननु घटे यद् रूपं तदेव न पटे इति रूपमपि नैकं साधारणम्, किन्तु प्रत्येकवृत्त्येवेति घट-पटोभयनिरूपितवृत्तित्वस्य प्रत्येकं रूपेऽभावाद् घट पटयो रूपमित्यपि व्यपदेशो व्यवहारनये न स्यादित्याशङ्कते–नन्वेवमिति। ननु घट पटोभयगतं यद् द्वित्वं तदाश्रयनिरूपितवृत्तित्वमेव रूपे ततः प्रतीयते, द्वित्वाश्रयश्च केवलो घटोऽपि भवति पटोऽपि च, तन्निरूपितवृत्तित्वं घटरूपे पटरूपे च समस्तीति घट-पटयो रूपमित्यस्य नानुपपत्तिरित्यत आह–द्वित्वेति। तयोः घट पटयोः, घट पटयोर्घटरूपमित्यस्य घट पटगतद्वित्वाश्रयनिरूपितवृत्तितावद् घटरूपमित्यर्थकत्वेन तादृशद्वित्वाश्रयघटनिरूपितवृत्तित्वस्य घटरूपेऽबाधिततया तद्बोधस्य प्रामाण्यापत्तेरित्यर्थः। यदि च घट-पटयोर्घटरूपमित्यस्य घट-पटोभयनिरूपितवृत्तितावद् घटरूपमित्येवार्थः, तस्य च बाधितत्वेन नाप्रामाण्यस्य तादृशप्रयोगापत्तिरिति विभाव्यते, तदा घट-पटयो रूपमित्यस्यापि घट पटोभयनिरूपितवृत्तितावद् रूपमित्यर्थकत्वेन कुत्रापि रूपे उभयनिरूपितवृत्तित्वस्याभावादुक्तप्रयोगस्यापि सम्भव इत्याह–द्वित्वविरोधे चेति।

वृत्तित्वबोधे च प्रकृतप्रयोगस्याप्यनापत्तेरिति चेत्, न स्यादेव, एतादृशस्थले समुदितवृत्तित्वबोध एव व्यवहार-सामर्थ्यात्, सङ्ग्रहाश्रयणात् तु सामान्यत एव साकाङ्क्षत्वात् स्यादपि।

ऋजुसूत्रस्तु ब्रूते–पञ्चविधः प्रदेश इत्युक्ते प्रतिस्वं पञ्चविधत्वान्वयात् पञ्चविंशतिविधत्वप्रसङ्गः। न च सामान्यतस्तदन्वयान्न बाध इति वाच्यम्, विशेषविनिर्मोकेण तदसिद्धेः।' किञ्च, किमत्र पञ्चविधत्वम्? पञ्चप्रकारत्व-

---

प्रकृतप्रयोगस्यापि घट-पटयो रूपमिति प्रयोगस्यापि। अत्रेष्टापत्तिमेव समाधानतयाऽऽह– न स्यादेवेति–व्यवहारनये घट-पटयो रूपमिति प्रयोगो न भवेदेवेत्यर्थः। एतादृशस्थले घट-पटयो रूपमित्यादिप्रयोगस्थले च। समुदितवृत्तित्वबोध एव एकव्यक्तिधर्मिकोभयाधारत्वकसमुदितवृत्तित्वबोध एव। तत् किं नयान्तरेऽप्युक्तप्रयोगो न भवत्येव? भवति चेत्, कुत्र भवतीत्यपेक्षायामाह–सङ्ग्रहाश्रयणात् त्विति–सङ्ग्रहनये रूपत्वेन सामान्येन रूपमात्रस्यैकीकरणाद् घटे यद् रूपम्, यच्च पटे तदुभयमपि रूपत्वेन सामान्येनैकमिति तद् घटे पटे च वर्तत इति सङ्ग्रहनयाऽऽश्रयणाद् घट-पटयो रूपमिति प्रयोगो भवेदपीत्यर्थः।

व्यवहारनये पञ्चविधः प्रदेश इति व्यपदेश उपपादितस्तमसहमानस्य ऋजुसूत्रस्य यद् वक्तव्य तदाह–ऋजुसूत्रस्तु ब्रूत इति। प्रतिस्वं प्रतिप्रदेशव्यक्ति। धर्मास्तिकायप्रदेशः पञ्चविधः, अधर्मास्तिकायप्रदेशः पञ्चविधः, आकाशास्तिकायप्रदेशः पञ्चविधः, जीवास्तिकायप्रदेशः पञ्चविधः, स्कन्धप्रदेशः पञ्चविध इत्येवं पञ्चविंशतिविधत्वप्रसङ्ग इत्यर्थः। न च इत्यस्य 'वाच्यम्' इत्यनेनान्वयः। सामान्यतः प्रदेशत्वेन प्रदेशे। तदन्वयात् पञ्चविधत्वान्वयात्। न बाधः न प्रदेशे पञ्चविधत्वस्य बाधः। विशेषविनिर्मोकेण धर्मास्तिकायप्रदेशादिव्यतिरेकेण।

मिति चेत्, कः प्रकारः ? संख्या वा बुद्धिविशेषविषयत्वं वा, भेदो वा । नाद्यः—अनन्तेषु प्रदेशेषु पञ्चसंख्यावधारणासिद्धेः । न द्वितीयः—पञ्चप्रकारबुद्धिविषयत्वस्य प्रत्येकमभाविनः पञ्चस्वप्यभावात् । न च गेहेषु शतमश्वा इतिवत् प्रत्येकं प्रत्येकधर्मप्रकारकबुद्धिविषयत्वं तत् सा-

---

तदसिद्धेः प्रदेशसामान्यस्यासिद्धेः । प्रदेशे पञ्चविधत्वमपि निरुच्य योजयितुमशक्यमित्याह—किमेति । अत प्रदेशे । नाद्य इति—पञ्चप्रकारत्वमित्यत्र प्रकारः सङ्ख्यारूपो न सम्भवतीत्यर्थः । धर्मास्तिकायादिषु कस्यचिदसङ्ख्याताः प्रदेशाः कस्यचिदनन्ताः प्रदेशा इति सामान्यतः प्रदेशानामानन्त्यमेव, तत्र पञ्चसङ्ख्यकत्वरूपस्य पञ्चप्रकारत्वस्यावधारणासम्भवादित्याह—अनन्तेष्विति । पञ्चप्रकारत्वमित्यत्र प्रकारपदेन बुद्धिविशेषविषयत्वमभिमतमिति द्वितीयपक्षोऽपि न युक्त इत्याह—न द्वितीय इति । यद्यपि प्रकारस्य बुद्धिविशेषविषयत्वरूपत्वे तत्र पञ्चान्वये पञ्चप्रकारत्वमिति पञ्चबुद्धिविशेषविषयत्वमिति स्यान्न तु पञ्चप्रकारकबुद्धिविशेषविषयत्वम्, तथापि बुद्धिविशेषविषयत्वस्य प्रकाररूपताश्रयणस्यात्रैव तात्पर्यमित्यवलम्ब्य 'पञ्चप्रकारकबुद्धिविषयत्वस्य' इत्युक्तिः । प्रत्येकम् एकैकप्रदेशव्यक्तौ । अभाविन —असतः । पञ्चस्वप्यभावादिति—प्रत्येकावृत्तिधर्मस्य समुदायावृत्तित्वमिति नियममाश्रित्येयमुक्तिः । ननु यथैकस्मिन् गेहे एकोऽश्वस्तदन्यस्मिन् द्वितीयः, एवं गेहान्तरेऽश्वान्तरमित्येवमश्वशतगृहसम्बन्धे भवति गेहेषु शतमश्वा इति प्रतीतिः, न च प्रत्येकमश्वस्य बहुगेहसम्बन्धो नवाऽश्वशतस्य प्रत्येकगेहसम्बन्धः, तथा प्रत्येकं प्रदेशस्य प्रत्येकधर्मप्रकारकबुद्धिविषयत्वे पञ्चसु प्रदेशेषु पञ्चप्रकारकबुद्धिविषयत्वं स्यादित्याशङ्क्य प्रतिक्षिपति—न चेति 'प्रत्येकधर्मप्रकारकबुद्धिविषयत्वं तद्' इत्यनन्तरं 'न च' इत्यस्यान्वयः, तदित्यनेन पञ्चप्रकारकबुद्धिविषयत्वस्य परामर्शः । निषेधे हेतुमाह—सामान्येति—पञ्चविधः प्रदेश इत्यत्र

मान्यविश्रामेऽनन्वयात्, विशेषविश्रामे च भजनानामान्तरत्वात्। न तृतीयः—अनिरिक्तभेदानिरुक्तेः। ततो भाज्यः प्रदेशः—स्याद् धर्मास्तिकायस्य, स्यादधर्मास्तिकायस्येत्यादि।

---

पञ्चविधश्च पञ्चप्रकारकबुद्धिविषयत्वम्, तच्च प्रत्येकं प्रत्येकधर्मप्रकारकबुद्धिविषयत्वं प्रदेश इति यदि सामान्यविश्राम तदाऽनन्तप्रदेशास्तत उपस्थितास्तत्र प्रत्येकं पञ्चसु पञ्चधर्मान्तर्गतप्रत्येकधर्मप्रकारकबुद्धिविषयत्वस्यान्वयसम्भवेऽपि ततोऽवशिष्टेषु प्रत्येकमपि तस्यान्वयासम्भवात्। यदि च पञ्चप्रकारकबुद्धिविषयत्वं पञ्चान्तर्गततत्तद्धर्मप्रकारकबुद्धिविषयत्वमिति न विवक्षितम्, किन्तु यत्र प्रदेशे यद्धर्मप्रकारकबुद्धिविषयत्वसम्भवस्तत्र तदेव विवक्षितमित्येव विशेषविश्रामेऽन्वयसम्भवेऽपि पञ्चप्रकारत्वं षट्प्रकारत्वं सप्तप्रकारत्वमित्यादि सर्वमपि सम्भवतीति सर्वप्रकारे प्रत्येकधर्मप्रकारकबुद्धिविषयत्वस्य स्वासाधारणधर्ममादाय तत्तत्प्रदेशे सम्भवादिति भजनैवात्र पदं दधातीत्याह—विशेषविश्रामे चेति। भजनानामान्तरत्वादिति—तत्तत्प्रदेशे तत्तदसाधारणधर्ममुपादाय प्रत्येकं प्रत्येकधर्मप्रकारकबुद्धिविषयत्वान्वयत पञ्चप्रकारकबुद्धिविषयत्वस्य समर्थने धर्मप्रदेशो धर्मास्तिकायप्रदेशत्वप्रकारकबुद्धिविषयत्वमधर्मप्रदेशोऽधर्मास्तिकायप्रदेशत्वप्रकारकबुद्धिविषयत्वमित्यादि दिशैवाश्रिता, एवञ्च प्रदेशो धर्मास्तिकायस्य, प्रदेशोऽधर्मास्तिकायस्येत्येव द्विविध व्यपदेशः प्राप्नोति, तत्र च प्रत्येकधर्मप्रकारकबुद्धिविषयत्वप्राप्तेरियेच भजनैव नामान्तरेणाभिहिता स्यात्, सा चेष्टैव ऋजुसूत्रस्येति भावः। प्रकारो भेद इति पञ्चप्रकारत्वं पञ्चभेदत्वमिति तृतीयपक्षोऽपि समीचीन इत्याह— न तृतीय इति। भेदो नाम यदि पृथग्निर्वचनीयो भवेत् तदा स्यादपि पञ्चभेदत्वं प्रदेशानाम्, तस्यैव निर्वचनमशक्यमित्याह अनिरिक्तेति तत्तत्प्रदेशातिरिक्त इत्यर्थः। यत्र चास्य यदनुगमस्याभिमत तदुपदर्शयति—ततो भाज्य इति। भज-

शब्दनयस्तु प्रतिजानीते–अयुक्तमुक्तमेतद् ऋजुसूत्रेण, भजनाया विकल्परूपत्वेनैकतरमादाय विनिगन्तुमशक्यत्वात्, धर्मास्तिकायप्रदेशस्यापि अधर्मास्तिकायत्वेन भजनीयत्वप्रसङ्गात् । तदेवमभिधेयम्–धर्मे धर्म इति वा प्रदेशो धर्मः, अधर्मेऽधर्म इति वा प्रदेशोऽधर्मः, आकाश आकाश इति वा प्रदेश आकाशः, जीवे जीव इति वा प्रदेशो नोजीवः, स्कन्धे स्कन्ध इति वा प्रदेशो नो-

नामस्कारमाह–प्रदेशः स्याद् धर्मास्तिकायस्येति–'प्रदेशः' इति स्यादधर्मास्तिकायस्येत्याद्यप्यनुपञ्जनीयः, आदिपदात् प्रदेशः स्यादाकाशास्तिकायस्येत्यादेरुपग्रहः ।

अमार्थे शब्दनयवक्तव्यमुपदर्शयति–शब्दनयस्त्विति । अयुक्तमिति–ऋजुसूत्रेणोक्तमेतदयुक्तमित्यन्वयः, एतद् भजनीयत्वम् । अयुक्ततामेव साधयति–भजनाया इति–प्रदेशप्रदेशिमद्भावस्य कल्पनिकत्वेन भजनीयत्वे कल्पना विकल्परूपेच्छामात्रप्रभवेति यद्धर्मास्तिकायप्रदेशस्येत्त विकल्पितं तत्त् तथाविकल्पदशायां धर्मास्तिकायस्य प्रदेश इत्येवं व्यपदेश्य, तदन्यथाविकल्पमात्रे न धर्मास्तिकायस्य प्रदेश इत्येवं व्यपदेश्य इत्यतः स्याद् धर्मास्तिकायस्य प्रदेशः, यद्वा स्यादधर्मास्तिकायस्य प्रदेश इति भजना ऋजुसूत्रसम्मता, तथा चेयमिच्छाप्रभवा विकल्परूपा भजना, न वस्तुपरतन्त्रेति प्रतिनियतमेव कमप्युपादाय स्यादित्यत्र नियामकाभावाद् यं धर्मास्तिकायप्रदेशं परिकल्प्य स्याद् धर्मास्तिकायस्य प्रदेश इति भजना, तमुपादायापि स्यादधर्मास्तिकायस्य प्रदेश इत्यपि प्रसज्येतेत्याशयेनाह–विकल्परूपत्वेनेति । शब्दनयः स्वाभिमतं दर्शयति–तदेवमिति–धर्माधर्माकाशप्रदेशानां धर्माधर्माकाशरूपतया व्यपदेशः, जीवप्रदेशस्य जीवरूपत्वेन [illegible] व्यपदेशः, किन्तु नोजीवत्वेन, स्कन्धप्रदेशस्य न स्कन्धरूपत्वेन व्यपदेशः, किन्तु नोस्कन्धत्वेनेत्यत्र हेतुमुपद-

स्कन्ध इति। अत्र धर्माऽधर्मास्तिकायादेरैक्यात् तत्प्रदेशस्य धर्मास्तिकायादिरूपताऽनतिप्रसक्तेति तथोक्तिः। जीव-स्कन्धयोस्तु प्रतिस्वमनन्तत्वात् कथमधिकृतप्रदेशस्य सकलसन्तानात्मकत्वसम्भव इति विवक्षितप्रदेशे सकलसन्तानैकदेशविवक्षितसन्तानात्मकत्वप्रतिपादनाय नो जीवत्व नोस्कन्धत्वोक्तिरिति ध्येयम्।

समभिरूढस्त्वाह–शब्देनापि न सूक्ष्ममीक्षाक्षमे "धर्मे प्रदेशः" इत्यादिवाक्यात् "कुण्डे बदरम्" इत्यादेरिव भेदप्रसङ्गात्। क्वचिदभेदे सप्तमीप्रयोगेऽप्यभेदप्रकारक-

---

दर्शयति अत्रेति। 'धर्माधर्मास्तिकायादे' इत्यत्रादिपदादाकाशास्तिकायस्य ग्रहणम्। तत्प्रदेशस्य धर्माधर्मास्तिकायादिप्रदेशस्य। तथोक्ति धर्म इति अधर्म इति आकाश इत्येव तत्तत्प्रदेशानानुक्ति। प्रतिस्वमनन्तत्वाद् जीवानामप्यनन्तत्वात्, पुद्गलस्कन्धानामप्यनन्तत्वात्। 'कथम्' इत्यस्य 'सम्भव' इत्यनेनान्वयात् कथं सम्भव? न कथञ्चिदित्यर्थः। अधिकृतप्रदेशस्य विवक्षितैकजीवप्रदेशस्य विवक्षितैकस्कन्धप्रदेशस्य च। सकलसन्तानात्मकत्वसम्भव सकलजीवलक्षणसन्तानात्मकत्वस्य सकलस्कन्धलक्षणसन्तानात्मकत्वस्य च सम्भव, जीवस्य स्कन्धस्य च प्रदेशसन्तानरूपत्वादेव तत्प्रदेशसम्भव इत्याशयेन सन्तानोक्ति। विवक्षितप्रदेशे विवक्षितैकजीवप्रदेशे विवक्षितैकस्कन्धप्रदेशे च। सकलेति–सकलजीवसन्तानस्य सकलस्कन्धसन्तानस्य च एकदेशो यो विवक्षितसन्तानो विवक्षितैकजीवलक्षणसन्तानो विवक्षितैकस्कन्धलक्षणसन्तानश्च तदात्मकत्वप्रतिपादनायेत्यर्थः, अन्यत् स्पष्टम्।

समभिरूढनयवक्तव्यमुपदर्शयति–समभिरूढस्त्वाहेति। भेदप्रसङ्गादिति–आधाराधेयभावबोधनायैव सप्तमी प्रयुज्यते, आधाराधेयभावश्च भेद

योधार्थं कर्मधारयस्यैवावश्याश्रयणीयत्वाद् द्वितीयपक्ष एव युक्त इति।

एवम्भूतस्त्वाह—देश-प्रदेशकल्पनारहितमखण्डमेव वस्तु अभिधानीयम्, देश-प्रदेशयोरसत्त्वात्, भेदे सम्बन्धानुपपत्तेः, अभेदे सहोक्त्यनुपपत्तेः। न च विन्ध्य-हिमवदादिभावाऽभावावच्छेदकतयाऽऽकाशादिदेशसिद्धिः,

---

नियत इत्यभिसम्बन्धः। क्वचिदिति-वनेतिलका चाहमेवेत्येवंरूप इत्यादौ। द्वितीयपक्ष—'धर्मे धर्मं इति वा' इत्यादौ धर्मं इत्यादिरूपः प्रथमान्तपक्षः।

एवम्भूतनयाभिप्रायमुपदर्शयति-एवम्भूतस्त्वाहेति। 'देशप्रदेशयो-रसत्त्वाद्' इति यदुक्तं तदुपपादनायाह-भेद इति-धर्मादीनां देश-प्रदेशौ धर्मादिभ्यो भिन्नौ स्यातामभिन्नौ वा? प्रकारान्तराभावात्, भेदे धर्मस्य देशो धर्मस्य प्रदेश इति षष्ठ्यर्थः सम्बन्धो न घटते, भेदे सम्बन्धाभ्युपगमे भिन्नत्वाविशेषाद्धर्मास्तिकायादिप्रदेशतयाऽ-भ्युपगतप्रदेशस्यापि धर्मस्य प्रदेश इति व्यवहारभाजनत्वं स्याद्-धर्मादिप्रदेशस्यापि धर्मसम्बन्धित्वसम्भवात्। अभेदे देश-प्रदेशयो-र्धर्मादिभिः सममभेदे। सहोक्त्यनुपपत्तेः, धर्मः प्रदेश इति सहोक्त्य-नुपपत्तेः, नहि भवति घटो घट इति। आकाशे विन्ध्याद्रिरपि वर्तते हिमालयोऽपि, परं तयोरसामानाधिकरण्यं लोके प्रतीयते तत्र स्यादिति यत्प्रदेशावच्छेदेन विन्ध्याद्रिस्तत्प्रदेशावच्छेदेन न हिमा-लयो यत्प्रदेशावच्छेदेन हिमालयो न तत्प्रदेशावच्छेदेन विन्ध्याद्रि-रित्यवश्यमभ्युपेयम्, तथा च विरुद्धयोर्विन्ध्य-तदभावयोर्हिम-तद्-भावयोर्विन्ध्यहिमयोश्चैकत्राकाशे सत्त्वोपपत्तयेऽवच्छेदकतयाऽऽका-शस्य तथा धर्मादिष्वपि देशप्रदेशसिद्धिः, तत्सम्बन्धिन एव तद्वृत्तिधर्मा-वच्छेदकत्वमिति नियमेन देश-प्रदेशयोराकाशादिसम्बन्धित्वाभावे तद्वृत्तिविन्ध्य-तदभावाद्यवच्छेदकत्वमपि न भवेदिति तयोः सम्ब-न्धसिद्धिरित्याशङ्क्य प्रतिक्षिपति- न चेति। निषेधे हेतुमाह-परेणेति-

परेण समं सम्बन्धस्यैवानुपगमात् तादात्म्य तदुत्पत्त्यन्यतरानुपपत्तेरिति दिक् ।

प्रस्थको मगधदेशप्रसिद्धो धान्यमानविशेषः, तदर्थं वनगमन-दारुच्छेदन क्षणनोत्किरण-लेखन प्रस्थकपर्यायाविर्भावेषु यथोत्तरशुद्धा नैगमभेदाः, अतिशुद्धनैगमस्त्वाकुञ्चितनामानं प्रस्थकमाह । व्यवहारेऽप्ययमेव पन्थाः ।

---

सर्वं हि स्वात्मप्रतिष्ठितमेव, न तु परस्मिन् वृत्ति, आकाशादिना सम विन्ध्यादीनां सम्बन्ध एव नाभ्युपेयते, वास्तवसम्बन्धस्तादात्म्य तदुत्पत्त्यन्यतरात्मक एव, नहि आकाशादिना समं विन्ध्यादेस्तादात्म्यं कार्यकारणभावो वेति सम्बन्धाभावादाकाशादौ विन्ध्यादिवृत्तेत एव नेति न तद्वृत्त्यवच्छेदकतयाऽऽकाशादिदेशसिद्धिरित्यर्थः ।

प्रस्थकदृष्टान्तेन नैगमादीनां पूर्वपूर्वापेक्षयोत्तरोत्तरस्य शुद्धिमात्त्वं भावयति-प्रस्थक इत्यादिना । तदर्थं प्रस्थकार्थम्, प्रस्थकहेतुकाष्ठानयनार्थं वनं गच्छन् पुरुषः किं करोषीति पृष्टः प्रस्थकं करोमीत्येवं ब्रूते, एवं क्षणनोत्किरणादिक्रियाकाले प्रस्थकपर्यायाभिर्मापनक्रियाकालेऽपि च, तत्र वनगमनादिकं न प्रस्थकः, किन्तु परम्परया प्रस्थकनिमित्तम्, पारम्पर्येऽपि च विप्रकर्षे सन्निकर्षे तरतमभावाच्छुद्धितारतम्यं नैगमाभिप्रायविशेषाणाम्, वनगमनकालेऽपि प्रस्थकं करोमीति यदेतद् व्यवहरणं तन्नैगमाभिप्रायत एवेति बोध्यम्, वनगमनादिकं न प्रस्थकोऽथापि प्रस्थकत्वेन तद्व्यवहरणमित्युपचारसमभिधानाद् वनगमनादिषु प्रस्थकाभिप्रायाणामशुद्धिसम्पर्कः, धान्यमानविशेषरूपस्य प्रस्थकस्य निष्पत्तौ सत्यामयं प्रस्थक इति व्यपदेशस्त्वतिशुद्धनैगमादित्याह-अतिशुद्धनैगमस्त्विति । आकुञ्चितनामानम् आकुञ्चितमनामप्रसिद्धिं गतं प्रस्थकपर्यायनिष्पत्त्यनन्तरं निर्मीतप्रामाण्यकान्यप्रस्थकमितधान्यान्यूनाधिकधान्यमापरीक्षणेन प्रस्थक इति नाम यस्य तमित्यर्थः ।

सङ्ग्रहस्तु विशुद्धत्वात् कारणे कार्योपचारं कार्याऽकरणकाले च प्रस्थकं नाङ्गीकुरुते। न च तदा घटाद्यात्मकत्वप्रसङ्गः, तदर्थक्रियां विना तत्त्वायोगात्। घटादिशब्दार्थक्रिया तत्राप्यस्त्येवेति चेत्, न–असाधारणतदर्थ-

---

व्यवहारेऽप्युक्तदिशैव युक्तिसाम्यभावनेत्याह–व्यवहारेऽपीति।

प्रस्थके सङ्ग्रहनयमुपदर्शयति–सङ्ग्रहस्त्विति–वनगमनादिकं परम्परया प्रस्थककारणम्, तत्र प्रस्थकलक्षणकार्योपचारं कृत्वाऽशुद्धे नैगमेऽशुद्धे व्यवहारे च प्रस्थकव्यपदेशः, सङ्ग्रहस्तु विशुद्धत्वात् कारणे कार्योपचारं नाङ्गीकुरुते, धान्यमापनलक्षणस्वकार्याकरणकाले च निष्पन्नमपि प्रस्थकं प्रस्थकत्वेन रूपेण नाङ्गीकुरुते, किन्तु धान्यमापनविशेषलक्षणक्रियाकरणवेलायामेव प्रस्थकमङ्गीकरोतीत्यर्थः। ननु निष्पन्नमपि प्रस्थकस्वरूपं स्वकार्याकरणकाले यदि न प्रस्थकस्तदा प्रस्थकादन्यत् सत् घटादिस्वरूपमेव भवेदिति घटाद्यात्मकत्वं तत्र प्रसज्यत इत्याशङ्क्य प्रतिक्षिपति–न चेति। तदा कार्याकरणादिकाले। यथा च प्रस्थको न स्वकार्यं धान्यमापनलक्षणं करोतीति न प्रस्थकस्तथा घटादिकार्यं जलाहरणाद्यर्थक्रियामपि न करोतीति घटाद्यात्मकत्वस्याप्यभावादित्याह–तदर्थक्रियां विनेति–घटादिकार्यजलाहरणाद्यर्थक्रियां विनेत्यर्थः। तत्त्वायोगात् घटाद्यात्मकत्वासम्भवात्। ननु घटादेर्यथा जलाहरणादिकाऽर्थक्रिया तथा घटादिशब्दप्रयोगोऽपि, शब्दप्रयोगश्चेच्छोपरचितः प्रस्थकेऽपि केनाश्चित् स्यादिति घटाद्यात्मकत्वं प्रसज्यत एवेत्याशङ्कते–घटादिशब्देति। तत्रापि प्रस्थकेऽपि। नहि दरिद्रे धनाधिपोऽयमिति सङ्केतकरणतो धनाधिपशब्दप्रयोगलक्षणार्थक्रियाकारित्वतो वास्तवधनाधिपात्मकत्वं सम्भवति, किन्तु धनस्वामिन एव धनस्य दानादिलक्षणार्थक्रियाकारित्वतो धनाधिपत्यमिति यदसाधारणार्थक्रियाकारित्वं यस्य तस्य तदात्मकत्वमित्येव नियम इति घटादेरसाधारणार्थक्रिया जलाहरणादिरूपैव तत्कारित्वस्य प्रस्थकेऽभावान्न तत्र घटाद्यात्मकत्वप्रसङ्ग इति।

क्रियाकारित्वस्यैव तदात्मकत्वप्रयोजकत्वात्। तथापि प्रस्थकक्रियाविरहे नायं प्रस्थको घटाद्यनात्मकत्वाच्च नाप्रस्थक इत्यनुभयरूपः स्यात्? न स्यात्—प्रतियोगिकोटौ तस्यापि प्रवेशेन यावद्घटाद्यनात्मकत्वासिद्धेः। अर्थक्रियाभावाऽभावाभ्यां द्रव्यभेदाभ्युपगमे ऋजुसूत्रमता-

---

समाधत्ते—नेति। ननु प्रस्थकस्य स्वासाधारणकार्याकरणकाले न प्रस्थकत्वं घटाद्यर्थक्रियाकारित्वाभावेन घटाद्यनात्मकत्वान्नाप्रस्थकत्वमिति प्रस्थकाप्रस्थकान्यतरस्वभावविकलोऽयं स्यात्, स चाभ्युपगन्तुमशक्यः परस्परविरोधे एकनिषेधेऽपरस्यावश्यम्भावादित्याशङ्कते—तथापीति—असाधारणघटाद्यर्थक्रियाकारित्वाभावाद् घटाद्यात्मकत्वाभावेऽपीत्यर्थः। यथा—घटादिकः प्रस्थकाभिन्नत्वादप्रस्थकस्तथा प्रस्थकत्वेनाभिमतोऽपि प्रस्थकासाधारणार्थक्रियाकरणाभावकाले प्रस्थकभिन्नत्वादप्रस्थक इति अप्रस्थकभेदप्रतियोगिकोटौ तस्यापि प्रवेश इति 'नाप्रस्थक' इत्येव नाङ्गीक्रियत इत्यनुभयरूपतापादनं न सम्भवतीति समाधत्ते—न स्यादिति। अनुभयरूपतापादनं न भवेदित्यर्थः प्रतियोगिकोटौ 'नाप्रस्थकः' इत्यस्य प्रतियोगी अप्रस्थकस्तत्कोटौ तत्स्वरूपे। तस्यापि प्रस्थकासाधारणार्थक्रियाकरणविरहकाले यः प्रस्थकः प्रस्थकभिन्न इति निर्णीतस्तस्यापि। प्रसिद्धघटाद्यनात्मकत्वेऽपि अप्रस्थकपदेन प्रस्थकानात्मका यावन्तो घटाद्यात्मका अभिमतास्तन्मध्येऽस्यापि प्रवेशेन घटाद्यनात्मकत्वासिद्धेः—घटाद्यनात्मकत्वासम्भवात्। ननु अभिन्नद्रव्याभ्युपगन्तृत्वं सङ्ग्रहस्वभावः, प्रकृते प्रस्थकद्रव्यं स्वार्थक्रियाकरणकाले प्रस्थकस्वरूपं स्वार्थक्रियाकरणाभावकाले ततोऽन्यदेव संवृत्तमिति द्रव्यभेदाभ्युपगन्तृत्वादुक्तस्वभावप्रच्युतेर्न सङ्ग्रहत्वं किन्तु भेदलक्षणविशेषाभ्युपगन्तृत्वादृजुसूत्रनयत्वमेव स्यादित्युक्ताभ्युपगमस्य ऋजुसूत्रमतानुप्रवेश इति शङ्कते—अर्थक्रियाभावाभावाभ्यामिति। अतिशुद्धनैगमोऽर्थक्रियाकरणकालीनमेव प्रस्थकमाश्रयति, तं चायं सङ्गृह्णातीति प्रकृते तथास्वभावाभावेऽपि नान्यत्र

नुप्रवेश इति चेत्, न-नैगमोपगतसङ्ग्रहणाय काचित्क-तथोपगमेन तदननुप्रवेशात्। इत्थं च व्यक्तिभेदात् तद्व्यक्तिगतं प्रस्थकत्वसामान्यमपि नास्तीति नात्र कश्चिद् दोषो विना व्यवहारबाधमिति दिक्।

ऋजुसूत्रस्तु-निष्पन्नस्वरूपोऽर्थक्रियाहेतुः प्रस्थकः, तत्परिच्छिन्नं च धान्यमपि प्रस्थक इत्याह, उभयसमाजादेव मानोपपत्तेरेकतराभावे परिच्छेदासम्भवात्। कथं

---

द्व्यभेदाभ्युपगमप्रवणता, ऋजुसूत्रस्य तु नैवम्भाव इति न तन्मतप्रवेश इति समाधत्ते-नेति। तदननुप्रवेशाद् ऋजुसूत्रमतानुप्रवेशात्। इत्थं च धान्यमापविशेषलक्षणार्थक्रियाफलोपधायिप्रस्थकद्रव्यात् तादृशफलोपधानशून्यप्रस्थकद्रव्यस्य भिन्नत्वव्यवस्थितौ च। तद्व्यक्तिगतं तादृशफलोपहितप्रस्थकव्यक्तिगतम्। प्रस्थकत्वसामान्यमपि यत् प्रस्थकत्वसामान्यं तदपि। नास्ति फलानुपहितप्रस्थकव्यक्तौ नास्ति। इति-अतः। अत्र एवमभ्युपगमे। न कश्चिद् दोषो विना व्यवहारबाधं व्यवहारबाधं विना नान्य कोऽपि दोषः, यद्यपि व्यवहारबाध एव बलीयान् दोषः, व्यवह्रियते धान्यक्रियाऽकरणकालेऽप्यय प्रस्थक इति तस्याप्रस्थकत्वे स्यादेव व्यवहारबाध इत्यर्थः।

ऋजुसूत्रमतमप्युपदिशति-ऋजुसूत्रस्त्विति-अस्य 'आह' इत्यनेन सम्बन्धः। तत्परिच्छिन्नं धान्यमानविशेषकाष्ठादिनिर्मितप्रस्थकपरिच्छिन्नम्। उभयसमाजादेव मापकप्रस्थक-माप्यधान्योभयत एव। मानोपपत्तेः-एतत्परिमितं धान्यमित्याकारकपरिच्छेदलक्षणमानोपपत्तेः। एकतराभावे परिच्छेदकस्य मापकस्याभावे परिच्छेद्यस्य माप्यस्य धान्यस्याभावे वा। ननु धान्यं मीयमानत्वात् कर्म, प्रस्थकश्च माने साधकतमत्वात् करणम्, करणे प्रस्थके धान्यस्य प्रवेशाभ्युपगमे कर्मतया तद्व्यपदेशो न स्यात् कर्मत्व-करणत्वयोर्विरोधादित्याशङ्कते-कथं तर्हीति-

तर्हि प्रस्थकेन धान्यं मीयत इति ? करणरूपानुप्रविष्टस्य
क्रियारूपाप्रवेशादिति चेत्, सत्यम्–विवक्षाभेदादुभय
रूपानुप्रवेशोपपत्तेरिति दिक् ॥

शब्दसमभिरूढैवम्भूतास्तु प्रस्थकाधिकारज्ञगतात्
प्रस्थककर्तृगताद् वा प्रस्थकोपयोगादतिरिक्तं प्रस्थकं न स-
हन्ते, निश्चयमानात्मकप्रस्थकस्य जडवृत्तित्वायोगात्,
बाह्यप्रस्थकस्याप्यनुपलम्भकालेऽसत्त्वेनोपयोगानतिरेका-
श्रयणाद् अन्ततो ज्ञानाद्वैतनयानुप्रवेशाद् वा । न च ज्ञाना-

---

कथमित्याशये, ततश्च न कथञ्चिदित्यर्थः । तत्र हेतुमाह–करणेति ।
करणत्वविवक्षया करणरूपानुप्रवेशः कर्मत्वादिविवक्षया क्रियानुप्रवेश
इत्येवमभ्युपगमे उभयरूपानुप्रवेशसम्भवादिति समाधत्ते–सत्यमिति–
स्यादेव भवदाक्षिप्तं यदि विवक्षाभेदो न भवेदित्यनुमोदनार्थमेतत् ।
प्रकृते तु विवक्षाभेदोऽस्तीत्याह–विवक्षाभेदादिति । उभयरूपेति–करण
क्रियोभयरूपेत्यर्थः ।

त्रयाणां शब्दनयानां प्रस्थकविषये समानाभिप्रायाणां वक्तव्यमुपद
र्शयति–शब्द–समभिरूढैवम्भूतास्त्विति–अस्य 'न सहन्ते' इत्यनेनान्वयः ।
प्रस्थकेति–प्रस्थकेन धान्यं मीयत इति प्रस्थकस्य धान्यमाननिश्चयन
प्रयोजनमिति यो जानाति स प्रस्थकाधिकारज्ञः पुरुषस्तद्गतात्
तद्वृत्ते । वा अथवा । प्रस्थककर्तृगतात् प्रस्थकनिर्माणकर्तृपुरुषवृत्ते ।
प्रस्थकोपयोगात् प्रस्थकज्ञानात् । अतिरिक्तं भिन्नं प्रस्थकं च सहन्ते नाभ्यु
पगच्छन्ति । तथा चैतेषां मते प्रस्थकोपयोग एव प्रस्थक इत्यर्थः ।
कथं न सहन्त इत्यपेक्षायां तत्र हेतुमाह–निश्चयेति–प्रस्थकपरिमित
मेतद्धान्यमित्याकारकं यन्निश्चयमानं तदात्मकस्तद्रूपो यः प्रस्थक
स्तस्य । जडवृत्तित्वायोगात् जडधर्मत्वासम्भवात्, अत्र 'जडत्वायोगाद्'
इत्युक्तावपि निर्वाहे वृत्तिपदमधिकमिति चिन्त्यम् । येन धान्यं
मीयते तदपि बाह्यवस्तु प्रस्थक इति व्यपदिश्यते, तत्र जडवृत्तित्व

**ज्ञानात्मकत्वोभयनयविषयसमावेशविरोधात् प्रत्येकमनयत्वमाशङ्कनीयम्, तादात्म्येनोभयरूपासमावेशेऽपि**

समस्त्येवेत्यत आह–बाह्यप्रत्यक्षस्यापीति–बाह्यस्य प्रत्यक्षत्वाभावे बाह्यप्रत्यक्षस्याप्रसिद्ध्या 'बाह्यप्रत्यक्षस्यापि' इत्युक्तिर्न घटत इति न वाच्यम्, एतेषां मतेऽसत्ख्यातेरपगमेन तदाश्रयणेन तथोक्तिसम्भवात्, यत् तु–प्रत्यक्षत्वेनाभिमतबाह्यस्यापीति तदर्थ इति, तत्र–उपयोगानतिरेकाश्रयणे सर्वस्यापि ज्ञानरूपतया बाह्यस्य कस्यचिदभावादसत्ख्यातिमन्तरा तदर्थस्याप्यघटमानत्वादिति बोध्यम्, यद्यपि बाह्यवस्तुवादिना बाह्यप्रत्यक्षस्यानुपलम्भकालेऽपि सत्त्वं स्वीक्रियत एवेति 'अनुपलम्भकालेऽसत्त्वेन' इत्येतदसिद्धं तथापि मानाधीना वस्तुव्यवस्थितिरिति यद् यदोपलभ्यते तदैव तदस्ति तदमानकाले तत्सत्त्वे मानाभावादित्यभिप्रायेणेत्थमुक्तिः। ननु भवतु यद् यदोपलभ्यते तदैव तत्सत्त्वं तदापि ज्ञानसमानकालीनमेव बाह्यं वस्तुवस्तु न तु तद्भाव इत्यत आह–उपयोगानतिरेकाश्रयणादिति–यद् येन सहैवोपलभ्यते तत् तद्रूपम्, यथा वस्तुनः स्वरूपम्, स्वोपयोगेन सहैवोपलभ्यते बाह्यं वस्त्वित्युपयोगरूपं तदित्येवमुपगमादित्यर्थः। नन्वेवं न केवलं बाह्यप्रत्यक्षस्यैवोपयोगरूपत्वं घटादीनामप्युपयोगरूपत्वं प्रसज्यते ज्ञानविषयताया ज्ञानतादात्म्यनियतत्वादिति चेद्, अस्त्वेवम्, का नो हानिः? एतेषां त्रयाणामपि नयानां ज्ञानाद्वैतनयानुप्रवेशस्यानुमतत्वादित्याह–अन्तत इति। ननु 'अनतिरेकाद् ज्ञानाद्वैताद्' इत्यनुक्त्वा 'अनतिरेकाश्रयणाज्ज्ञानाद्वैतनयानुप्रवेशाद्' इत्येवमभिधानतः स्वयमज्ञानात्मकत्वमभिमतं बाह्यस्य, नयान्तरेण च ज्ञानात्मकत्वमित्युभयनयविषयोऽर्थः, तत्समावेशो नैकस्मिन् नये घटत इति ज्ञानात्मकत्वविषयकस्य नयस्याज्ञानात्मकत्वविषयकस्य नयस्य प्रत्येकं ज्ञानात्मकत्वाऽज्ञानात्मकत्वोभयविषयकत्वाभावादनयत्वमासक्तमित्याशङ्क्य प्रतिक्षिपति–न चेति–अस्य 'माशङ्कनीयम्' इत्यनेनान्वयः। येन नयेन बाह्यस्य ज्ञानात्मकत्वमुपदर्श्यते तेन नयेन

विषयत्व-तादात्म्याभ्यां तदुभयसमावेशात्। विषयत्वमपि कथञ्चित्तादात्म्यमिति तु नयान्तराकूतम्, यदाश्रयणेन 'अर्थाऽभिधान-प्रत्ययानां तुल्यार्थत्वम्' उक्तमिति दिक्।

विषये ज्ञानस्य तादात्म्यमेव संसर्ग इति स विषयो ज्ञानात्मक इति ज्ञानात्मकत्वं तत्र घटत इति तद्ग्राहिणो नयस्य नयत्वमुपपद्यते, येन च नयेन बाह्यस्याज्ञानात्मकत्वमुपदर्श्यते तेन च नयेन विषये ज्ञानस्य विषयत्वमेव संसर्ग इति स विषयोऽज्ञानात्मक इत्यज्ञानात्मकत्वं तत्र घटत इति तद्ग्राहिणो नयस्य नयत्वमुपपद्यत इत्यनेनैवैकेनोभयरूपसमावेशस्याभावेऽपि विषयत्व-तादात्म्याभ्यामुभयरूपसमावेशः स्यादित्याह-तादात्म्येनेति-अभेदेनेत्यर्थः। ज्ञानात्मकस्याऽज्ञानात्मकत्वाभेदाभावेनाभेदेनोभयरूपसमावेशाभावेऽपीत्याह-उभयेति। तदुभयसमावेशाद् ज्ञानात्मकत्वाऽज्ञानात्मकत्वोभयसमावेशात्। ननु विषयत्वेनापि ज्ञानात्मकत्वमेव नाऽज्ञानात्मकत्वं विषयत्वस्य तादात्म्यरूपत्वादिति कथं विषयत्व-तादात्म्याभ्यामुभयरूपसमावेश इत्यत आह-विषयत्वमपीति-तथा च यन्नयेन विषयत्वस्य कथञ्चित् तादात्म्यरूपता तन्नयेन विषयत्वस्याऽज्ञानात्मकत्वनिमित्तत्वं नात्राभिप्रेतमित्याशयः। अथवा यन्नयेन विषयत्वं कथञ्चित् तादात्म्यं तन्नयेनैकेनैव विषयत्वलक्षणनिमित्तेन ज्ञानात्मकत्वाऽज्ञानात्मकत्वोभयसमावेश इत्याह-विषयत्वमपीति। कथञ्चित्तादात्म्य ज्ञानेन सह विषयस्य कथञ्चित्तादात्म्यम्, कथञ्चित्तादात्म्यञ्च भेदसहिष्णुरभेद इति ज्ञानात्मकत्वाऽज्ञानात्मकत्वोभयसमावेश इत्याशयः। यदाश्रयणेन नयान्तराभिप्रेतकथञ्चित्तादात्म्यलक्षणविषयत्वाश्रयणेन, 'उक्तम्' इत्यनेनान्वयः। तुल्यार्थत्वम् एकशब्दवाच्यत्वेन तुल्यार्थत्वम्, तच्च तदा भवेद् यादृशं वाच्यत्वमेकत्र तादृशमेव त्रिषु, तच्च विषयत्वस्य कथञ्चित्तादात्म्यरूपत्वे सत्युपपद्यते, यतः शब्दजन्यबोधविषयत्वादर्थस्य शब्दवाच्यत्वम्, तत्र विषयत्वं तादात्म्यरूपम्, एवं तेन तज्ज्ञानमप्यभिधीयत इति प्रत्य-

वसतिराधारता, सा च यथोत्तरशुद्धानां नैगमभेदानां लोके तिर्यग्लोके जम्बूद्वीपे भरतक्षेत्रे तद्दक्षिणार्धे पाटलिपुत्रे देवदत्तगृहे तन्मध्यगृहे चावसेया। अतिशुद्धनैगमस्तु वसन् वसतीत्याह। नन्वाधारताऽऽधारस्वरूपा तत्संयोगस्वरूपा वा, उभयथापि गृहकोण इव लोकेऽप्येकक्षेत्रतया तदविशेषात् किं विशुद्धितारतम्यम्? नह्यत्र प्रस्थक-

स्यापि शब्दजन्यबोधविषयत्वम्, तत्र ज्ञानं शब्दजन्यमेवेति ज्ञानस्यैव स्वविषयत्वमिति तदपि तादात्म्यमेव, शब्दोऽपि स्वेनाभिधीयते, स्वस्य स्वतादात्म्यमप्यस्ति स्वजन्यबोधविषयत्वमप्यस्ति तद्विषयत्वमपि तादात्म्यमेवेत्येवं तुल्यार्थत्वमिति बोध्यम् ।

वसतिनिदर्शनेन नैगमादीनां भावयति-वसतिरधारतेति। सा च आधारता पुनः, अस्या लोकेऽवसेया तिर्यग्लोकेऽवसेयेत्येवमन्वयः। तद्दक्षिणार्धे भरतक्षेत्रदक्षिणार्धे। तन्मध्यगृहे देवदत्तगृहमध्यगृहे। देवदत्तो वसतीत्युक्ते भवति जिज्ञासा कुत्र वसतीति, तत्र नैगमाभिप्रायविशेषाश्रयणेन लोके देवदत्तो वसतीति विपुलाधारत्वमाश्रयणेनोत्तरप्रवृत्तिः, क्रमेणोत्तरोत्तराऽऽधारसंकोचसमाश्रयणेन तिर्यग्लोके देवदत्तो वसतीत्युत्तरप्रवृत्तिः, अतिशुद्धनैगमस्तूपचाररहितो देवदत्तस्य विद्यमाननिवासानुभवसमय एव तदाधारतामभ्युपैतीत्याह-अतिशुद्धनैगमस्त्विति। लोके वसति, तिर्यग्लोके वसतीत्यादौ विशुद्धितारतम्यनिमित्तं विशेषमपश्यन् परः शङ्कते-नन्विति। तत्संयोगस्वरूपा आधारेण सहाऽऽधेयस्य यः संयोगस्तत्स्वरूपा। उभयथापि आधारताया आधाररूपत्वे तत्संयोगरूपत्वेऽपि च। अतिसंकुचिताधारोपदर्शनार्थं गृहकोण इति, तेन संकुचितान्याधारस्याप्युपलक्षणम्। अतिविपुलाधारोपदर्शनार्थं लोक इति, तेन विपुलाधारान्तरस्योपलक्षणम्। तदविशेषाद् आधारत्वाविशेषात्। यथा च वनगमनादौ परम्परया प्रस्थककारणे कार्यप्रस्थकोपचाराद् गौणनामसमन्वयः, निष्पन्न-

न्यायवद् गौणमुख्यविषयकृतो विशेषोऽस्तीति चेत्, सत्यम्-देवदत्तसंयोगपर्यायपरिणतगृहकोणक्षेत्रस्याखण्डक्षेत्राद् धर्मभेदावेशेन पृथक्कृतस्य यथाक्रमं गुरुगुरुतरविषये भेदोपचारेण विशुद्ध्यपकर्षसम्भवात्, अन्यथा लोके

प्रस्थके चोपचाराऽनाश्रयणान्मुख्यतासम्भवत्ययस्तत्कृतं विशुद्धितारतम्यं न तथा प्रकृते गौणमुख्यनिमित्तं समस्तीत्याह-नहीति-अस्य 'विशेषोऽस्ति' इत्यनेनान्वयः। अत्र आधारतायाम्। समाधत्ते-सत्यमिति-स्थूलदृष्टौ विशेषाऽनाकलनाद् भवदाशङ्कितं स्यादेव युक्तम्, किन्तु सूक्ष्मेक्षिकायां विशेषोऽवभासत एव, ततश्च विशुद्धितारतम्यं स्वीकरणीयमेवेत्याशयेनाह-देवदत्तेति-देवदत्तस्य गृहकोणक्षेत्रेण यः संयोगः स न पराभिमतो गुणः किन्तु पर्याय एव, तद्रूपेण परिणतं यद् गृहकोणक्षेत्रं तस्य। कथम्भूतस्य तस्येत्यपेक्षायामाह-अखण्डक्षेत्राद् लोकस्वरूपात्। पृथक्कृतस्य पृथक्त्वलक्षणभेदं प्राप्तस्य। विरुद्धधर्माध्यासाद् भेदो भवतीति नियमेनाखण्डलोकलक्षणक्षेत्राद् यत्राकाशप्रदेशव्यापित्वादपेक्षयाऽल्पाकाशप्रदेशव्यापित्वलक्षणधर्मभेदेन पृथक्करणमस्येति पृथक्करणनिमित्तमाह-धर्मभेदावेशेनेति-धर्मधर्मिणोरभेदाद् धर्मभेदे धर्मिभेद इति धर्मभेदावेशोऽपि विरुद्धधर्माध्यास एवेति बोध्यम्। यथाक्रममिति-'लोके तिर्यग्लोके' इत्यादिना यः क्रम उपदर्शितस्तत्र योऽन्तिमस्तत्पूर्वपूर्वसमाश्रयणेन यः क्रमस्तमनतिक्रम्येत्यर्थः। गुरुगुरुतरविषय इति-विषयपदेन देशो विवक्षितः, तथा च गृहकोणापेक्षया गृहमध्यगृहं गुरुदेशस्तदपेक्षया देवदत्तगृहं गुरुदेशस्तदपेक्षया पाटलिपुत्रो गुरुदेश इत्येवं क्रमेण गुरुगुरुतरविषय इत्यर्थः। भेदोपचारेणेति-गृहकोणभेदो मध्यगृहे तद्भेदो देवदत्तगृहे तद्भेदः पाटलिपुत्रे इत्येवं भेदोपचारेणेत्यर्थः। विशुद्ध्यपकर्षसम्भवादिति-गृहकोणे देवदत्तस्य संयोगपर्यायलक्षणाधारतारूपा वसतिर्निरुपचरिता समस्तीति तत्र या विशुद्धिस्तदपेक्षया मध्यगृहवसत्याद्याररूपा सैवेत्येवं विशुद्ध्यपकर्षसम्भवादित्यर्थः। अन्यथा उपचाराऽना-

वसामीत्यन्वयस्यैवानुपपत्तिः, नहि कृत्स्ने लोके देवदत्तवसतिरस्ति, न च विनोपचारं कृत्स्नलोकरूढाल्लोकपदात् तद्देशोपस्थितिरस्ति। हन्त, एवं वृक्षे कपिसंयोग इत्यत्राप्युपचारः स्यादिति चेत्, कः किमाह, स्यादेव। कार्त्स्न्यविनिर्मोकेणान्वयोपपत्तौ किमुपचारेणेति चेत्, देशाग्रहे तद्विनिर्मोक एव कथम्? पदशक्त्यनुपग्रहादिति—

श्रयणे। कथमनुपपत्तिरित्यपेक्षायामाह—नहीति—हि यतः, कृत्स्ने लोके देवदत्तवसतिर्नास्तीत्यन्वयः। एतावतोपचाराश्रयणस्यावश्यकत्वं न स्पष्टं प्रतीयत इत्यत आह—न चेति—अस्य 'अस्ति' इत्यनेनान्वयः, कृत्स्नलोके देवदत्तवसत्यभावे लोके वसामीत्यन्वयोपपत्तिस्तदैव स्याद् यदि लोकपदं लोकैकदेशे एककोणे लाक्षणिकमभ्युपगम्येत, लक्षणा चोपचार एवेत्याशयः। ननु वृक्षेऽपि सम्पूर्णे कपिसंयोगो न वर्तते किन्तु वृक्षैकदेशे शाखायामेव कपिसंयोग इति वृक्षपदस्य वृक्षैकदेशे शाखायां लक्षणारूपोपचाराश्रयणे एव वृक्षे कपिसंयोग इत्यस्योपपत्तिरित्युपचारस्तत्रापि स्यादित्याशङ्कते—हन्त, एवमिति। तत्राप्युपचार इष्ट एवेति समाधत्ते—क किमाहेति—वृक्षे कपिसंयोग इत्यत्र नोपचार इति नाहं कथयामि येन मां प्रतीदमापादनमनिष्टतया भवता क्रियेत। तथा चेष्टापादनमेवेदमित्याह—स्यादेवेति—वृक्षे कपिसंयोग इत्यत्रोपचारः स्यादेवेत्यर्थः। 'स्यादेवम्' इति पाठान्तरे तु कः किमाह इत्यत्रैवोत्तरसमाप्तिः, 'स्यादेवम्' इति त्वग्रेतनप्रश्नघटकमेव, तत्र एवं स्यात् 'कार्त्स्न्य०' इत्यादिना यदाशङ्क्यते तत् स्यादित्यर्थः। कार्त्स्न्येति—वृक्षे कपिसंयोग इत्यत्र कार्त्स्न्यं वृक्षविशेषणतया नोपात्तमस्ति येन कृत्स्नवृक्षे कपिसंयोगाभावादन्वयानुपपत्तिः स्यादित्यन्वयानुपपत्त्यभावादुपचाराश्रयणं तत्र न कर्तव्यमेवेति प्रष्टुरभिप्रायः। वृक्षपदस्य वृक्षैकदेशे उपचारे सत्येव कार्त्स्न्यविनिर्मोको नान्यथेति 'कार्त्स्न्यविनिर्मोकेण' इत्युक्त्यैवोपचार आगत इत्याशयेन समाधाता पृच्छति—देशाग्रह इति—वृक्षपदेन वृक्षदेशशाखाद्यनुपस्थितावित्यर्थः।

चेत्, न–स्कन्धपरस्य वृक्षपदस्यैकत्वपरिणतिरूपस्कन्धपदार्थेनैवोपग्रहात्, भेदविनिर्लुठित एव वृक्षपदार्थ आश्रीयत इति चेत्, न–अनुभवबाधेन तथाश्रयणायोगादिति दिक्।

---

शक्तिनिर्मोकः कार्त्स्न्यविनिर्मोकः, पदशक्तिर्नाद्रियते येन पदशक्त्या देशसमुदितिरूपपदार्थोपस्थितिस्तत्समुदितिरूपवृक्षपदार्थे कपिसंयोगाऽन्वयानुपपत्त्यैकदेशे तदन्वयार्थमुपचारः स्यात्, किन्तु वृक्षात्मकपदार्थोपग्रहत एव तत्रान्वयबोध उपेयत इत्येतावतैव कार्त्स्न्यविनिर्मोक आगत इत्याशङ्कते–पदशक्त्यनुपग्रहादिति–तद्विनिर्मोक इत्यनुवर्तते। नहि पदशक्तिमन्तरेणैव तत्र वृक्षपदार्थोऽकस्मादापतितो येन पदार्थोपग्रहत एवान्वयबोधोपपत्तिर्भवेत्, पदार्थोपग्रहेऽपि वृक्षपदस्यैवार्थत्वात् पदार्थ इति स्यात्, स्कन्धपरस्य वृक्षपदस्य तु एकत्वपरिणतिरूपस्कन्ध एव पदार्थस्तदुपग्रहे पदशक्त्युपग्रहः स्यादेव, तथा च पदशक्त्यनुपग्रहेऽन्वयबोधलक्षणः शाब्दबोधो न भवेदेव, तथा च या पदशक्तिः कृत्स्ने वृक्षस्वरूपे तां परित्यज्य यैकदेशे तच्छक्तिरेवान्वयबोधानुकूलतया प्रवृत्ते आश्रयणीया, कृत्स्नशक्तिपरित्याग एव च कार्त्स्न्यविनिर्मोकः, एकदेशशक्तिरेव चोपचार इत्यागतोऽस्ति मार्ग इत्याशयेन समाधत्ते नेति। स्कन्धपरस्य स्कन्धशक्तस्य। एकत्वेन परिणतः स्कन्धो न वृक्षपदार्थः, येन स्कन्धस्य देशसमष्टिरूपतया भेदोऽपि तत्र प्रविशेत्, सर्वदेशेषु च कपिसंयोगाभावेनान्वयानुपपत्त्या देशविशेषाश्रयणमपि कर्त्तव्य स्यादित्युपचारः स्यात्, किन्तु भेदविनिर्मुक्ताखण्डवृक्षस्वरूप एव वृक्षपदार्थ, तत्रैव च कपिसंयोगान्वय इति नोपचाराश्रयणमित्याशङ्कते–भेदविनिर्लुठितेति। न खलु शाखा मूलाद्यवयवभेदविनिर्मुक्तोऽखण्डवृक्षावयविरूपपदार्थोऽनुभूयते, अवयवसमुदायसमन्वितस्यैवावयविनोऽनुभवादित्यखण्डवृक्षपदार्थाश्रयणं मनोरथमात्रमिति समाधत्ते नेति। तथाश्रयणायोगाद् भेदविनिर्लुठितवृक्षपदार्थाश्रयणासम्भवात्।

प्रयोगे 'क' इत्याद्याकाङ्क्षाबाहुल्याबाहुल्यकृतं विशुद्ध्यविशुद्धिवैचित्र्यम्, अत एव वसन् वसतीति प्रयोगस्य व्युपरताकाङ्क्षत्वात् सर्वविशुद्धनैगमभेदत्वमित्यपि वदन्ति ।

व्यवहारेऽप्ययमेवानुसरणीयः पन्थाः । नन्वत्र कथं वसन् वसतीति भेदः? पाटलिपुत्रादन्यत्र गतस्यापि पाट-

[1] प्रकारान्तरेण तत्र विशुद्धितारतम्योपपादकं मतान्तरमुपदर्शयति-प्रयोग इति-लोके वसतीत्युक्तौ लोके क्व वसतीत्याकाङ्क्षा, तन्निवृत्त्यर्थं तिर्यग्लोके वसतीति प्रयोक्तव्यम्, एवमपि तिर्यग्लोके क्व वसतीत्याकाङ्क्षा जायत एव, तन्निवृत्त्यर्थं जम्बूद्वीपे वसतीति प्रयोक्तव्यम्, एवमग्रेऽपि, तथा च प्रथमतो लोके वसतीत्युक्तौ निराकाङ्क्षबोधं यावद् बाधस्य उत्तरोत्तरक्रमेण केत्याद्याकाङ्क्षाः, ततः क्रमेण तिर्यग्लोके वसतीत्यादिप्रयोगेऽल्पीयस्य एव ता इति यदपेक्षया केत्याद्याकाङ्क्षाबाहुल्यं यत्र तत्र तदपेक्षयाऽविशुद्धिः, यदपेक्षया केत्याद्याकाङ्क्षाऽऽबाहुल्यमर्थान्न्यूनसङ्ख्यककेत्याद्याकाङ्क्षा यत्र तत्र तदपेक्षया विशुद्धिरित्येवं विशुद्ध्यविशुद्धिवैचित्र्यं बोध्यम् । अत एव विशुद्ध्यविशुद्धिवैचित्र्यस्य केत्याद्याकाङ्क्षाबाहुल्याऽबाहुल्यकृतत्वादेव ।

वसतिनिदर्शनेन नैगमनये यथा विशुद्ध्यादिर्भावितं व्यवहारेऽपि तथैवेत्याह-व्यवहारेऽपीति । अतिशुद्धनैगमे यथा वसन् वसतीति प्रकारः, तथा स प्रकारो व्यवहारे न सम्भवतीति 'व्यवहारेऽप्ययमेव' इत्याद्युक्तिर्न संगतेति शङ्कते-नन्वेति-अत्र 'न चात्र' इति पाठोऽशुद्ध एवेति बोध्यम् । अत्र व्यवहारनये । कथमित्याक्षेपे-वसन् वसतीति भेदो व्यवहारनये न सम्भवतीत्यर्थः । व्यवहारनयेन हि यथैव लोके व्यवह्रियते तथैवोपेयते वर्तमानकाले तत्रावसतोऽपि पूर्वकालीनावसत्वमुपादाय वसतीति व्यवहारस्य दर्शनेन तत्र वर्तमानकालीनवसत्यभावादित्याह-पाटलिपुत्रादिति । भवतु पाटलिपुत्रभिन्न-

लिपुत्रवासित्वेनैव व्यवहारादिति चेत्, सत्यम्–तत्र बहुकालप्रतिबद्धतद्गतगृहकुटुम्बस्वामित्वाद्यर्थे वासित्वपदोपचारेण तथाप्रयोगात्। वस्तुतो वसन्नेव वसतीति व्यवहारेणाभ्युपगमात्, अन्यथा नाद्य सोऽत्र वसतीति व्यवहारो न स्यात्। व्यवहारप्रबलत्वाबलवत्त्वेऽभ्यासानभ्यासाधीने इति नात्र निर्बलत्वाशङ्काऽपि युक्तेति दिक्।

सङ्ग्रहस्तु संस्तारकारूढ एव वसतीत्यभ्युपैति,

प्रयागादिगतस्यापि पुंस पूर्वकालीनपाटलिपुत्रनिवासाश्रयणेन पाटलिपुत्रनिवासित्वेन व्यवहारः, स तूपचारात्, मुख्यतस्तु वर्तमानकालीनपाटलिपुत्रनिवासकर्तृत्वत एव तथाव्यवहार इति समाधत्ते–सत्यमिति–भवता यदुच्यते तदुपचारत सत्यमित्यर्थस्वीकार। उपचारो ह्यन्यार्थे वर्तमानस्य पदस्यान्यनार्थे वृत्त्याश्रयणतो भवतीत्याशयवानाह–तत्रेति–पाटलिपुत्रनिवासित्वेन व्यवहार इत्यर्थः। तथेति–पाटलिपुत्रगतेरित्यर्थः। तथाप्रयोगात् पाटलिपुत्रे वसतीति प्रयोगात्, प्रयोगकाले पाटलिपुत्रभिन्नक्षेत्रे वर्तमाने पुरुषे पाटलिपुत्रेऽय वसतीति प्रयोगस्य बहुकालप्रतिबद्धपाटलिपुत्रगतगृहकुटुम्बस्वामी पुरुषोऽयमित्यर्थः। मुख्यतस्तु व्यवहारेऽपि वसन्नेव वसतीत्याह–वस्तुत इति। अन्यथा व्यवहारे मुख्यतो वसन्नेव वसतीत्यस्यानभ्युपगमे, अन्यत्र गतेऽपि पाटलिपुत्रे वसतीत्यस्य मुख्यतयाऽभ्युपगमे च। अन्यत्र गतेऽपि पुंसि पाटलिपुत्रवासित्वेन यो व्यवहार स प्रबल, तत्रैव नाद्य सोऽत्र वसतीति यो व्यवहार स दुर्बल इति दुर्बलेन तेन प्रबलस्य तस्य बाधासम्भवान्मुख्यत एव तदुपपत्तावुपचाराश्रयण न युक्तमिति न वाच्यम् व्यवहारप्राबल्य दौर्बल्ययोरभ्यासाऽनभ्यासाऽधीनत्वेन प्रकृते नाद्य सोऽत्र वसतीति व्यवहारस्याभ्यस्ततया दौर्बल्यासम्भवेन तत्र निर्बलत्वस्य शङ्कितुमप्यशक्यत्वादित्याह–व्यवहारेति।

अन्यत्र हि वासार्थ एव तस्य न घटते । न चायं प्राग्वदुपचारमप्याश्रयते, अत एव मूले वृक्षः कपिसंयोगीत्यप्येतन्मते मूलाभिन्नो वृक्षः कपिसंयोगीत्येवार्थ इति दिक् ।

ऋजुसूत्रस्तु येष्वाकाशप्रदेशेषु देवदत्तोऽवगाढस्तेष्वेव तद्वासमभ्युपैति । संस्तारके तद्वसत्युपगमे तु गृहकोणादावपि तदुपगमप्रसङ्गः । संस्तारकावच्छिन्नव्योमप्रदेशेषु तु संस्तारक एवावगाढो न तु देवदत्तोऽपीति न तत्रापि तद्वसतिभणितिः । संस्तारक गृहकोणादौ देवद-

वसतिविषये सङ्ग्रहाभिप्रायं प्रकटयति सङ्ग्रहस्त्विति–अस्य 'अभ्युपैति' इत्यनेनान्वयः । अयम् संस्तारकारूढमिनेपुंसि । तस्य सङ्ग्रहस्य, मत इति शेषः । ननूपचाराद् यथा नैगम-व्यवहारयोः संस्तारकारूढमिति वासार्थ उपपद्यते तथात्रापि स्यादित्यत आह–न चेति 'आश्रयते' इत्यनेनान्वयः । अयं सङ्ग्रहः । प्राग्वद् नैगम-व्यवहारवत् । अतएव उपचाराश्रयणाभावादेव । एतन्मते सङ्ग्रहमते । पयनरारेण वृक्षपदस्य वृक्षैकदेशे उपचारतो वृक्षैकदेशः कपिसंयोगीत्यर्थस्य व्यवच्छेदः ।

एतद्विषये ऋजुसूत्रनयाभिप्रायं दर्शयति–ऋजुसूत्रस्त्विति–अस्य 'अभ्युपैति' इत्यनेनान्वयः । तेष्वेव देवदत्तावगाढाकाशप्रदेशेष्वेव । तद्वासं देवदत्तवासम् । संस्तारके कुतो वसतिं नाभ्युपगच्छतीत्यपेक्षायामाह–संस्तारक इति । तद्वसत्युपगमे देवदत्तवसतिस्वीकारे । संस्तारके वसतिस्वीकारः सङ्ग्रहस्य संस्तारकेण सह देवदत्तस्य संयोगसद्भावादेव, संयोगश्च नाखिलेन संस्तारकेणेत्युपचारोऽत्राप्यावश्यक इत्युपचारेण संयोगो देशाश्रयणेनैवेति गृहकोणादिभिः सममभ्युपगन्तव्ये देवदत्तसंयोगस्य स्यादेवेति सङ्ग्रहस्य गृहकोणादावपि देवदत्तवसतिस्वीकारप्रसङ्ग इत्याह–गृहकोणादावपीति । तदुपगमप्रसङ्ग –देवदत्तवसतिस्वी-

त्तवसतिव्यवहारस्तु प्रत्यासत्तिदोषाद् भ्रान्तिमूलकः। विवक्षिताकाशप्रदेशेष्वपि च वर्तमानसमय एव देवदत्तवसतिर्नातीताऽनागतयोः, तयोरसत्त्वात्, प्रतिसमयं चलोपकरणतया तावदाकाशप्रदेशमात्रावगाहनासम्भवाचेति दिक्।

शब्द समभिरूढैवम्भूतास्तु स्वात्मन्येव वसतिमङ्गीकुर्वते, न ह्यन्यस्यान्यत्र वसतिसम्भवः, सम्बन्धाभावात्,

---

कात्प्रसङ्ग। तत्रापि संस्तारकावच्छिन्नव्योमप्रदेशेष्वपि। तद्वसतिभणिति देवदत्तवसतिव्यपदेशः, अयमभिप्राय -व्योमप्रदेशास्त यत्र संस्तारकावच्छिन्नाः स्युर्येषु संस्तारकावगाढ, यत्र च संस्तारकेणैव नैरन्तर्यलक्षणसंयोगान्वितेषु तेषु धुतो देवदत्तस्य योगसम्भावनेति। एव सति संस्तारके देवदत्तो वसति गृहकोणे देवदत्तो वसतीत्याद्या व्यवहाराः कथं समर्थनीया इत्यत आह-संस्तारक गृहकोणादाविति। प्रत्यासत्तिदोषाद् येष्वाकाशप्रदेशेषु देवदत्तस्य वसतिस्तत्प्रदेशसमीपवर्त्याकाशप्रदेशेषु संस्तारकस्यावगाढस्तत्संनिहितप्रदेशा गृहकोणावच्छिन्ना इत्येवं प्रत्यासत्तिलक्षणदोषात्। येष्वन्याकाशप्रदेशेषु तेष्वपि वर्तमानसमय एवेत्याह-विवक्षिताकाशप्रदेशेष्वपि चेति। तयो -रतीताऽनागतयो न केवलं तयोर्वर्तमानदेवदत्तसमयेऽसत्त्व किन्तु वर्तमानदेवदत्तस्याप्यतीतानागतयोरसत्त्वमेवेति बोध्यम्। यावत्स्वाकाशप्रदेशेष्वेकस्मिन् समये देवदत्तस्यावगाहो न तावत्स्वन्यसमये देवदत्तस्यावगाहसम्भवोऽणुपुञ्जात्मकस्य देवदत्तस्याणूनां चलस्वभावानां प्रतिसमयं चलित्वसम्भवेनावस्थानासम्भवादित्याह-प्रतिसमयमिति।

शब्दनयानामेतस्मिन् वक्तव्यमुपदिशति शब्देति। अङ्गीकुर्वते स्वीकुर्वन्ति। पक्षान्तरेणान्यत्र वसतेर्व्यवच्छेदं आवेदित, तत्र युक्तिमुपदर्शयति-नहीति। 'यत्र गामनादं' इत्युक्तिश्च तादात्म्यातिरिक्तस्य संसर्गं वास्तविकत्वनियामकः यदि च सम्बन्धमन्तरेणैव विवक्षिता

असम्बद्धयोराधाराधेयभावे चातिप्रसङ्गादिति दिक् ।

एवमेभिः श्रुतोपदर्शितनिदर्शनैरेतेषां यथाक्रमं विशुद्धत्वमवसेयम् ।

अथैतेषां लक्षणानि वक्ष्यामः–निगमेषु भवोऽध्यवसायविशेषो नैगमः, तद्भवत्वं च लोकप्रसिद्धार्थोपगन्तृत्वम्, लोकप्रसिद्धिश्च सामान्य-विशेषाद्युभयोपग-

कायप्रदेशेषु देवदत्तवसतिः स्यात् तद्भिन्नप्रदेशादिष्वपि सत्यसङ्गे नियामकाभावादित्याह–असम्बद्धयोरिति ।

उपसंहरति–एवमिति । एभिः प्रदेश-प्रस्थक-वसतिभिः । एतेषां नैगम-व्यवहार-सङ्ग्रहर्जुसूत्र-शब्द-समभिरूढैवम्भूतानाम् । यथाक्रमं दर्शितक्रममनतिक्रम्य, नैगमादिषु पूर्वपूर्वापेक्षयोत्तरोत्तरस्य विशुद्धत्वमुक्तनिदर्शनैरवगन्तव्यमित्यर्थः ।

इदानीं नैगमादीनामसाधारणस्वरूपाणां लक्षणानां निरूपणमधिकरोति–अथेति–नयसामान्यलक्षण तदुपपादन–तद्विषयव्यवस्थापनानुकूलस्याद्वादविषयवस्तुजात्यन्तरत्वव्यवस्थापन-तत्सामान्यविभजन-तद्वयान्तरविभजन प्रदेश-प्रस्थक वसतिदृष्टान्तदृढीकृतनैगमादिसप्तनयविशुद्धितारतम्यनिरूपणानन्तरमित्यर्थः । एतेषं नैगमादिसप्तनयानाम् । तत्र प्रथमोद्दिष्टं नैगमं लक्षयति–निगमेष्विति । तद्भवत्वश्च निगमभवत्वश्च । 'सामान्यविशेषादि॰' इत्यत्रादिपदाद् नित्याऽनित्य भेदाऽभेदादिपरिग्रहः । तथा च सामान्य-विशेषोभयाभ्युपगन्त्रध्यवसायविशेषत्वं नैगमनयत्वमिति नैगमनयलक्षणम्, एवं भेदाऽभेदोभयाभ्युपगन्त्रध्यवसायविशेषत्वादिकमपि तल्लक्षणम् । यद्यपि सामान्य विशेषोभयाभ्युपगन्त्रध्यवसायविशेषत्वं न भेदाऽभेदोभयाभ्युपगन्त्रध्यवसायविशेषे, भेदाऽभेदोभयाभ्युपगन्त्रध्यवसायविशेषत्वं न सामान्य-विशेषोभयाभ्युपगन्त्रध्यवसायविशेषे इत्यव्याप्तिः, सामान्य-विशेषोभय-भेदाऽभेदोभय-नित्याऽनित्योभयाद्यभ्युपगन्तृत्वं च न प्रत्येकं क्वापीति तथोपादानेऽसम्भव एव; तथापि सामान्य-विशेषोभयाभ्युपगन्त्रध्य-

मेन निर्वहति। अथ स्वतन्त्रसामान्य विशेषोभयाभ्युपगमे कणादवद् दुर्नयत्वम्, शबलतदभ्युपगमे च प्रमाणत्वमेव, यथास्थानं प्रत्येकं गौणमुख्यभावेन तदुपगमे च सङ्ग्रह-

वसायनिक्षेपवृत्तिनयत्वन्यूनवृत्तिजातिमत्त्व नैगमनयलक्षणम्, अत्र सामान्याभ्युपगन्त्रध्यवसायेत्यादिलक्षणे सङ्ग्रहेऽतिव्याप्तिरतो विशेष स्याभ्युपगमविषयतयोपादानम्, विशेषाभ्युपगन्त्रध्यवसायेत्यादिलक्षणे व्यवहारेऽतिव्याप्तिरिति सामान्यस्याभ्युपगमविषयतयोपादानम् 'नय त्वन्यूनवृत्ति' इत्यस्य जातिविशेषणतयाऽनुपादाने नयत्वजातिमादाय व्यवहारादौ सर्वनातिव्याप्तिरिति तदुपादानम्। यत्किञ्चिन्नैगम व्यव हारान्यतरत्वादिकमादाय व्यवहारादावति व्याप्तिवारणाय जाति' इति। वाक्ते-भवति। कणादवदिति-कणादश्च वैशेषिकदर्शनप्रणयनप्रवर्तो द्रव्य गुण कर्म सामान्य विशेष समवायाख्यान् षड् भावान् परस्परवि भिन्नानेवाभ्युपगच्छति अत्यन्तव्यतिरिक्तौ च सामान्यत विशेषौ न सम्भवत इति तदभ्युपगमस्य दुर्नयत्वे तद्वतोऽपि कणादस्य दुर्नयत्वे तद मेदोपचाराद्, अथवा कणादवद्' इत्यत्र कणादपदं कणादमतवर्तितद र्शनपरम्, तस्य यथा दुर्नयत्वं तथा नैगमनयस्यापीत्यर्थः। शबल भ्युपगमे च कथञ्चिदन्योऽन्याऽभिन्नसामान्य विशेषोभयाभ्युपगमे च। प्रमाणत्वमेवेति कथञ्चिदभिन्नसामान्य विशेषोभयस्वरूपवस्त्वध्यवसाया त्मकज्ञानत्वमेव प्रमाणत्वमिति तथाऽभ्युपगमे प्रमाणत्वमेव प्रसज्यत इति तद्वृत्तित्वात्तैर्नय नयत्वव्याप्यजात्युक्तलक्षणस्य नैगमनये सम्भव इत्यर्थः। यथास्थानमिति यत्र सामान्यस्य प्रधानतयोपगमस्तत्र विशे षस्य गौणतयोपगम, यत्र च विशेषस्य प्रधानतयोपगमस्तत्र सामा न्यस्य गौणतयोपगम इत्येवम्भूतप्रधान गुणभावेन सामान्य विशेषो भयाभ्युपगमवृत्तिनयत्वव्याप्यजातिमत्त्वस्य नैगमलक्षणत्वे सामान्य स्य प्रधानतया विशेषस्य गौणतयाऽभ्युपगमरूप सङ्ग्रहे विशेषस्य प्रधानतया सामान्यस्य गौणतयाऽभ्युपगमरूप व्यवहारे चोक्तलक्ष णगमनात्, तयोरपि च नैगमत्वमिति तदुभयव्यतिरिक्तनैगमनयो न

व्यवहारान्यतरप्रवेश इति चेत्, न–तृतीयपक्षाश्रयणे दोषाभावात्, उपधेयसाङ्कर्येऽप्युपाध्योरसाङ्कर्यात् ।

---

स्यादेवेत्यर्थः । समाधत्ते–नेति । 'तृतीयेति–प्रथमपक्षः स्वतन्त्रसामान्यविशेषाभ्युपगमलक्षणः, प्रत्येकतदुभयाभ्युपगमलक्षणो द्वितीयपक्षः, तौ प्रथमद्वितीयपक्षौ नाश्रीयेते किन्तु गौणमुख्यभावेन सामान्यविशेषोभयाभ्युपगमो नैगम इति तृतीयपक्ष एवाश्रीयते, तत्र दोषाभावादित्यर्थः । ननूक्त एव संग्रहव्यवहारान्यतरप्रवेशलक्षणो दोष इत्यत आह–उपधेयसाङ्कर्येऽपीति–गौणतया विशेषावगाही प्रधानतया सामान्यावगाही योऽभ्युपगमः स संग्रहलक्षणाक्रान्तत्वात् संग्रहो नैगमलक्षणाक्रान्तत्वान्नैगम इति गौणतया सामान्यावगाही प्रधानतया विशेषावगाही योऽभ्युपगमः स व्यवहारलक्षणाक्रान्तत्वाद् व्यवहारो नैगमलक्षणाक्रान्तत्वान्नैगम इत्येवमुपधेययोर्नैगमत्व-संग्रहत्वयोर्नैगमत्व-व्यवहारत्वयोरेकाधिकरणवृत्तित्वलक्षणसाङ्कर्येऽपीत्यर्थः । उपाध्योः नैगमत्वत्व-संग्रहत्वत्वयोर्नैगमत्वत्व-व्यवहारत्वत्वयोः । असाङ्कर्यात् एकाधिकरणावृत्तित्वात्, यतो यः प्राधान्येन सामान्यावगाहित्वे सति गौणतया विशेषावगाही अध्यवसायः, यश्च प्राधान्येन विशेषावगाहित्वे सति गौणतया सामान्यावगाही अध्यवसायस्तदुभयवृत्तिनयत्वन्यूनवृत्तिजातिमत्त्वं नैगमत्वम्, प्राधान्येन सामान्यावगाही गौणतया विशेषावगाही योऽध्यवसायस्तन्मात्रवृत्तिनयत्वन्यूनवृत्तिजातिमत्त्वं संग्रहत्वम्, प्राधान्येन विशेषावगाही गौणतया सामान्यावगाही योऽध्यवसायस्तन्मात्रवृत्तिनयत्वन्यूनवृत्तिजातिमत्त्वं व्यवहारत्वमिति भिन्नरूपे नैगमत्वे नैगमत्वत्वं वर्तते, तद्भिन्नस्वरूपे व्यवहारत्वे व्यवहारत्वत्वं वर्तते, तथा तदुभयभिन्नस्वरूपे संग्रहत्वे संग्रहत्वत्वं वर्तत इति, यदि चाभिन्नत्वमेव साङ्कर्यं तदोपधेयसाङ्कर्येऽपीत्यस्य नैगम-व्यवहारयोर्नैगम-संग्रहयोः साङ्कर्येऽपि उपाध्योर्नैगमत्व-व्यवहारत्वयोर्नैगमत्व-संग्रहत्वयोरसाङ्कर्यादित्यर्थः ।

आह–अतिरिक्तसामान्य विशेषानभ्युपगमे कथमनुवृत्ति-व्यावृत्तिबुद्धी ? न हि ते अहेतुके, नचैकहेतूद्भवे, न था निर्विषये एव दोषजे इति, मैवम्–वस्तुन एव मृदादि

ननु स्वतन्त्रसामान्य विशेषोभयाभ्युपगन्तृत्वे नैगमस्य कणादवद् दुर्नयत्वापादनं शङ्कायां यद् दर्शितं तेन वैशेषिकसम्मतयोरतिरिक्तसामान्य-विशेषयोः स्याद्वादिनोऽनभ्युपगम इति प्रतीयते, न च तयोरनभ्युपगमो युक्तः, तथा सति सामान्यनिरूपणाया अनुगतबुद्धेर्विशेषनिरूपणाया व्यावृत्तिबुद्धेरनुपपत्तिरेव न स्यादित्यनुगतबुद्धयन्यथाऽनुपपत्त्याऽतिरिक्तस्य सामान्यस्य व्यावृत्तिबुद्धयन्यथाऽनुपपत्त्याऽतिरिक्तस्य विशेषस्य चाभ्युपगन्तुमुचितत्वेन तदुभयाभ्युपगन्तृत्वेऽपि न नैगमस्य दुर्नयत्वमिति स्याद्वादानभिज्ञस्य परस्य शङ्कामुत्थापयति–आहेति–परो ब्रूते इत्यर्थः । ते अनुवृत्ति व्यावृत्तिबुद्धी, तयोरहेतुकत्वाभ्युपगमे आकाशादिवत् सर्वदा सत्त्वं गगनकुसुमादिवत् सर्वदाऽसत्त्वमेव वा स्यान्न कादाचित्कत्वम्, तदुक्तम्–

'नित्यं सत्त्वमसत्त्वं वाऽहेतोरन्यानपेक्षणात् ।
अपेक्षातो हि भावानां कादाचित्कत्वसम्भवः" ॥१॥ इति ।

ननु यद् घटादिवस्तुनि अनुगत-व्यावृत्तिबुद्धी जायेते तदेकघटादिवस्तुप्रभवे एव ते नाहेतुके इत्यत आह–नचैकहेतूद्भवे इति–सामग्रीवैजात्ये सत्येव कार्यवैजात्यम्, सामग्रीवैजात्यञ्च सामग्र्या विभिन्नकारणघटितत्वे सत्येवेति अनुगतव्यावृत्तिबुद्ध्योरेककारणप्रभवत्वे सामग्रीवैजात्याभावाद् विजातीयत्वं न स्यादतो नैकहेतूद्भवे ते अभ्युपगन्तव्ये इत्याशयः । यदि चानुगत-व्यावृत्तिबुद्ध्यो कुतश्चिद् प्रमाणाद् बाधः स्यात्, तदा बाधितत्वेन भ्रान्तयोस्तयोर्दोषजत्वेन निर्विषययोर्न सामान्य विशेषसाधकत्वम्, न चैवमपीत्याह–नवा निर्विषये एव दोषजे इति । वस्तुनोऽनुगत-व्यावृत्तोभयात्मकस्य यस्तुल्यपरिणामलक्षणोऽनुगतस्वभावस्तेनानुवृत्तिबुद्धेः यश्चातुल्यपरिणामलक्षणो व्यावृत्तिस्वभावस्तेन व्यावृत्तिबुद्धेश्चोत्पादसम्भवेन नैतदनु-

तुल्यपरिणामेनानुवृत्तिबुद्धेरूर्ध्वतायतुल्यपरिणामेन च व्यावृत्तिबुद्धेरुपपत्तेरतिरिक्तकल्पने मानाभावात्। तदुक्तम्।

"वस्तुन एव समानः परिणामोऽयं स एव सामान्यम्।
असमानस्तु विशेषो वस्त्वेकमनेकरूपं तु"॥१॥ इति।

अतिरिक्तं तु सामान्यं व्यक्तिष्वेकदेशेन समवेयात्, कार्त्स्न्येन वा ? आद्ये सावयवत्वप्रसङ्गः, अन्त्ये च प्रति-

रोधेनातिरिक्तसामान्य-विशेषाभ्युपगमो युक्त इति समाधत्ते-नैवमिति। अतिरिक्तकल्पने आधाराद्भूयात् सर्वथा भिन्नयोः सामान्य-विशेषयोः कल्पने। एकाऽनेकात्मकवस्तुन एव समानपरिणामः सामान्यम्, असमानपरिणामश्च विशेषस्ताभ्यामनुगत व्यावृत्तिबुद्धी इति बृद्ध-वचनसंवादतो द्रढयति-तदुक्तमिति।

वैशेषिकाभ्युपगतातिरिक्तसामान्यखण्डनं विस्तरतः सम्मतिटी-काकृद्भिः कृतमेव संक्षेपतो दर्शयति-अतिरिक्तं त्विति। अनेकासु व्यक्तिषु एकदेशेन सामान्यस्य वृत्तिस्तदैव स्याद् यदि बहवो देशाः सामान्यस्य भवेयुरिति तद्देशानां सामान्यावयवत्वे सामान्यस्य सावयवत्वं तत्पक्षे दुर्वारमित्याह-आद्य इति-व्यक्तिष्वेकदेशेन सामान्यं समवैतीति पक्ष इत्यर्थः। ते देशा अपि सामान्यस्य तदैव स्युर्यदि तेषु सामान्यं वर्तेत, तत्रापि चैकदेशेन सामान्यं समवेयात् कार्त्स्न्येन वेति वृत्तिविकल्पसम्भवेनाद्यपक्षेऽनवस्था दुर्वारा स्यादिति बोध्यम्, व्यक्तिषु सामान्यं कार्त्स्न्येन वर्तत इति पक्षस्तदैवोपपद्यते यदि यावत्यो व्यक्तयस्तावन्ति सामान्यानि स्युः, अन्यथैकं सामान्यं कार्त्स्न्येनैकस्यैव व्यक्तिस्थितमिति व्यक्त्यन्तरेषु सामान्यं न भवेदेवेति तदधीनबुद्ध्यनुपपत्तिः, अनेकसामान्यापत्तौ च सामान्यमेव तत्र भवेद् 'नित्यमेकमनेकानुगतम्' इति सामान्यलक्षणस्यैवाघटनादित्या-शयेनाह-अन्त्ये चेति-व्यक्तिषु कार्त्स्न्येन सामान्यं वर्तेत इति द्वितीय-

व्यक्ति नानात्वापत्तिः। न च व्यक्तिवृत्तित्वं सामान्यस्यो-पगम्यत एव, देश-कात्स्न्र्ययोस्त्वनुपगमादनुक्तोपालम्भ इति वाच्यम्, उक्तान्यतरप्रकारव्यतिरेकेणान्यत्र वृत्त्यदर्शनात्, अत्रान्यतरप्रकाराश्रयणेऽन्यतरदोषापत्तेर्वज्रलेपत्वादिति सम्मतिटीकाकृतामभिप्रायः। प्रतिव्यक्ति पर्याप्तत्वे प्रतिव्यक्ति परिसमाप्त्यापत्तिः, अन्यथा

---

यपक्षे रित्यर्थः। ननु व्यक्तिषु अनुगतप्रतीत्यन्यथाऽनुपपत्त्या सामान्यं तत्प्रतीत्युपपादकं वर्तेत इत्येव कल्प्यते न त्वेकदेशेन कार्त्स्न्येन वेति नोक्तदोषावकाश इति परोक्तमाशङ्क्य प्रतिक्षिपति–न चेति-'वाच्यम्' इत्युत्तरेण संबन्धः, एकस्य रज्जु-सर्पादिरवयविनोऽनेकत्र भूतलादिप्रदेशे वृत्तिरेकदेशेन दृश्यते, एकस्य परमाणोरेकस्मिन् देशे कार्त्स्न्येन दृश्यते, न तु प्रकारान्तरेण वृत्तिः कुत्रापि कस्यापि दृश्यत इति सामान्यस्याप्येतदन्यतरप्रकारेणैव वृत्तिर्युक्ता एतदन्यतरप्रकाराभावे तु न वर्तत एव सामान्यमित्येव कल्पयितुं युक्तेति प्रतिक्षेपहेतुमुपदर्शयति- उक्तान्यतरप्रकारव्यतिरेकेणेति- एकदेशावच्छिन्न-वृत्ति-कार्त्स्न्यावच्छिन्नवृत्त्यन्यतरप्रकारव्यतिरिक्तप्रकारेणेत्यर्थः। अन्यत्र सामान्यातिरिक्तपदार्थमात्रे। अत्र सामान्ये। अन्यतरेति-एकदेशेन वृत्त्याश्रयणे सावयवत्वप्रसङ्गस्य कार्त्स्न्येन वृत्त्याश्रयणे नानात्वप्रसङ्गस्य च वज्रलेपत्वादित्यर्थः। नायं सामान्यखण्डनप्रकारः परैः परिहर्तुं शक्यो वार्दिनिकरपरिशीलितयुक्तिजालापाकरणलम्पट-सम्मतिटीकाकृदुपपादितत्वाद्, एतत्परिष्कारसम्यगवबोधनाय सामान्यखण्डनप्रकारजिज्ञासुभिः सम्मतिटीकाऽवलोकनीयेति सम्मतिवृत्तिबहुमानप्रकटनायाह– सम्मतिटीकाकृतामभिप्राय इति। स्वयमपि पराभिप्रेतसामान्यखण्डनं न्यायालोके कृतमिति तदप्यवलोकनीयं जिज्ञासुभिरित्याशयेनाह–प्रतिव्यक्ति पर्याप्तत्व इति–तथा च नानात्वापत्तिरत्र

तु द्वित्वादितुल्यतापत्तेरिति न्यायालोके समर्थितमस्माभिः ।

समानपरिणामरूपसामान्याभ्युपगमेऽपि प्रतिविशेषं तदन्यत्वाद् विशेषाद्विशेष इति चेत्, न—स्वभावभेदेन तद्विशेषात्, अत एव समानत्वं सामान्यगर्भम्, तच्च तदग्रहे दुर्ग्रहमिति परास्तम्। तथाप्यनुवृत्तिधीजननस्वभाव-

स्यात्। अन्यथा तु प्रतिव्यक्ति पर्याप्त्यभावे पुनः। द्वित्वादीति—यथा द्वित्वादिकं पर्याप्त्या द्रव्यद्वय एव वर्तते न त्वेकस्मिन्, तथा सामान्यमपि यावद्व्यक्तिपर्याप्तमेव स्यान्न त्वेकैकवृत्तीत्यर्थः।

अतिरिक्तसामान्यस्य यथा कार्त्स्न्येन वृत्तिपक्षे नानात्वापत्तिस्तथा जैनाभ्युपगतसमानपरिणामरूपसामान्यपक्षेऽपि प्रतिव्यक्ति समानपरिणामस्यावयवसन्निवेशविशेषादिरूपस्य भिन्नत्वमेवेति नानारूपात् तस्मादनुवृत्तिप्रतीत्युपपत्तिर्विशेषेभ्य इवाविशेषादिति शङ्कते—समानेति। प्रतिविशेषं प्रतिव्यक्ति। तदन्यत्वात् समानपरिणामस्य भिन्नत्वात्। अतिरिक्तसामान्यपक्षे यथा विशेषस्य नानात्वं तथोक्तयुक्त्या सामान्यस्यापि नानात्वमिति विशेषतोऽनुगतप्रतीत्यभाववत् सामान्यतोऽपि नानुगतप्रतीतिसम्भवः, जैनमते तु व्यक्तेरेव समानपरिणामस्यानुगतप्रतीतिजनकत्वस्वभावः, अतुल्यपरिणामस्य च व्यावृत्तिप्रतीतिजनकत्वस्वभाव इति स्वभावभेदलक्षणस्य विशेषस्य सद्भावादुभयस्वभावात्मकव्यक्तितोऽनुवृत्ति-व्यावृत्तिबुद्ध्योरुपपत्तिरिति समाधत्ते—नेति। अत एव स्वभावभेदलक्षणस्य समानासमानपरिणामयोर्विशेषस्य सद्भावादेव, अस्य 'परास्तम्' इत्यनेनान्वयः। समानपरिणामरूपे सामान्ये परिणामविशेषणीभूतं समानत्वम् एकसामान्यवत्त्वमेकजातीयत्वं चेति सामान्यगर्भं सामान्यघटितम्। तच्च सामान्यघटितस्वरूपं समानत्वं च। तदग्रहे सामान्याग्रहे। दुर्ग्रहं ज्ञातुमशक्यम्, विशिष्टबुद्धौ विशेषणज्ञानस्य

परिणामत्वेनानुवृत्तिधीजनकताऽऽत्माश्रयादिति चेत्, न-वस्तुनस्तत्स्वभावस्य मृत्परिमाणत्वादिना जनकत्वेऽदोषात्, जनकताया अपि परिणामरूपत्वेन नानात्वस्य दोषानावहत्वादेकत्वसम्भवेन कार्यानुमानानुच्छेदादिति दिक् ।

---

सामान्यग्रहरूपकारणे सत्येवैकसामान्यघटकग्रहरूपकार्यस्य सम्भवात्, अनुवृत्तिबुद्धिजननस्वभाव एव समानपरिणाम इति तस्य सामान्याघटितत्वेन तद्ग्रहे सामान्यग्रहानपेक्षणादिति । नन्वनुवृत्तिधीजननस्वभावो भवतु समानपरिणाम एव तस्यानुवृत्तिधीजननस्वभावत्वेनैवानुवृत्तिबुद्धिं प्रति कारणत्वं वाच्यम्, तथा चानुवृत्तिबुद्धिजनकताया अनुवृत्तिधीजनकताऽवच्छेदिकैस्यात्माश्रयोऽत्र दुर्निवार इति शङ्कते-स्यादिति-समानपरिणामस्य सामान्याघटितत्वेऽपीत्यर्थः । 'अनुवृत्तिधीजननस्वभावपरिणामत्वेनानुवृत्ति०' इति स्थाने 'अनुवृत्तिधीजननस्वभावपरिणामत्वेन नानुवृत्ति०' इति पाठो बोध्यः । घटादिवस्तुनोऽनुवृत्तिधीजननस्वभावस्यानुवृत्तिधीजननस्वभावत्वेन न कारणत्वं येनात्माश्रयः किन्तु मृत्परिणामत्वेनैव, तत्र जनकस्याप्रवेशादात्माश्रयाभावादिति समाधत्ते-नेति । तत्स्वभावस्य अनुवृत्तिधीजननस्वभावस्य । 'मृत्परिमाणत्वादिना' इत्यस्य स्थाने 'मृत्परिणामत्वादिना' इति पाठो युक्तः । घट-शरावोदञ्चनादौ सर्वत्र मार्दवोऽयं मार्दवोऽयमित्यनुगतमतौ मृत्परिणामत्वेन कारणत्वम्, मृद्विकारे घटे सर्वत्र घटोऽयं घटोऽयमित्यनुगतमतौ मृत्परिणामविशेषत्वेन कारणत्वम्, एवं शरावाद्यनुगतप्रतीतावपि तत्तद्विलक्षणमृत्परिणामत्वादिनेति तत्सङ्ग्रहायाऽऽदिपदोपादानम् । ननु घटादौ तत्तत्कार्यभेदेन तत्तन्निरूपिता कारणताऽपि परिणामस्वभावा नानैव स्यादिति चेद्, अस्त्वेवम्, तस्या अपि नानात्वमेकत्वञ्चोपेयत एव, सामान्यत एकस्य तस्यानुवृत्तिबुद्धिलक्षणकार्येणानुमानमपि सम्भवत्येव, नाना-

अविषय एवाऽयं समानाकार इत्यपि न युक्तम्, बीजाभावात् । अनादिवासनादोषो बीजमिति चेत्, न-वासनाया बोधरूपत्वे समनन्तरज्ञानेऽपि तत्प्रसङ्गात् ! विशिष्टबोधरूपत्वे च किं वैशिष्ट्यमिति वाच्यम्, अनादिहेतुपरंपराजन्यत्वमिति चेत्, न-तत्रापि तन्मात्राऽविशेषात्, समुद्रोर्मिकल्पनाया अपि विभ्रहेतुस्वभावा-

स्याथ कार्यभेदाद् व्यावृत्तितो व्यावृत्तिबुद्धिरपि स्यादेवेत्याह-जनकताया अपीति । 'कार्यानुमान०' इत्यस्य कार्यलिङ्गकानुमानेत्यर्थः ।

सामान्यलक्षणविषयमन्तरेणैवानुवृत्तिबुद्धिर्भवतीति वस्तुतः समानपरिणामलक्षणमपि सामान्यं न कल्पनीयमिति बौद्धाऽऽशङ्कामुद्भाव्य प्रतिक्षिपति-अविषय एवेति-निर्विषयक एवेत्यर्थः । अयं समानाकार-अनुगताकारो बोधः । यद्यनुगताकारबोधस्य विषयोऽनुगतः कश्चिन्न स्यात् कारणाभावात् नादृशबोध एव न भवेदित्याह-बीजाभावादिति-निमित्ताभावादित्यर्थः । बौद्धः शङ्कते-अनादीति-अनादिवासनालक्षणदोषादेवानुगतबुद्ध्यात्मको विकल्पो भवतीत्यर्थः । वासना किं ज्ञानमात्रं विशिष्टज्ञानं वा ? आद्ये यत् किमपि ज्ञानमुत्पद्यते तत् पूर्वज्ञानादेवेति समनन्तरज्ञानमात्रे पूर्वज्ञानलक्षणवासनासमुत्थेऽनुगताकारता स्यादिति समाधत्ते-नेति । तत्प्रसङ्गात् समानाकारप्रसङ्गात् । द्वितीये स्याद्-विशिष्टबोधरूपत्वे चेति । किं वैशिष्ट्यं बोधविशेषणीभूतं वैशिष्ट्यं किम् ?, तथा च ज्ञाने विषयनिबन्धनमेव वैशिष्ट्यमिति विषयस्य समानपरिणामस्य सिद्धिरित्यभिसन्धिः । बौद्ध आह-अनादीति-अनादिहेतुपरम्पराजन्यत्वं ज्ञानमात्र एव वर्तेत इति ज्ञानमात्रमेव विशिष्टबोधरूपत्वाद् वासनेति तज्जन्यत्वाद् समनन्तरज्ञाने समानाकारप्रसङ्गस्तदवस्थ इति प्रतिक्षिपति-नेति । तत्रापि समनन्तरज्ञानेऽपि । तन्मात्राविशेषाद् अनादिहेतुपरम्पराजन्यज्ञानलक्षणवासनारूपदोषप्रभवत्वाविशेषात् । ननु समुद्रोर्मयो न समुद्रव्यति-

ङ्गीकारं विना वक्तुमशक्यत्वादिति विवेचितमन्यत्र॥

विशेषातिरेकेऽपि न प्रमाणमस्ति, विशेषाणामिव

---

रिक्ताः सन्ति, अथापि तदाकारकल्पना भवति तथैव समानपरिणामस्वभावाभावेऽपि तदाकारविकल्पः स्यादित्यत आह-समुद्रोर्मीति-समुद्रादेव समुद्रोर्मिकल्पना भवति, समुद्रश्चैकानेकस्वभाव एवेति तत्राऽपि कल्पना न विषयं विनेत्याशयः, एतावताऽतिरिक्तसामान्यप्रतिक्षेप स्याद्वादाभिमतसमानपरिणामस्वभावसामान्यसद्भावश्चोपपादितः।

अथ वैशेषिकाभ्युपगतातिरिक्तविशेषपदार्थं प्रतिक्षिपति-विशेषातिरेकेऽपीति-विशेषपदार्थभेदेऽपीत्यर्थः। न प्रमाणमस्तीति-ननु विरुद्धधर्माध्यासात् पदार्थानां भेद सिद्ध्यति, तत्र द्रव्यादीनां द्रव्यत्वादिविरुद्धधर्माध्यासाद् भेदः, पृथिव्यादीनां पृथिवीत्वादिजातिमत्त्वाद् भेदः, घट-पटादीनां च घटत्व पटत्वादिजातिमत्त्वाद् भेदः, तत्रानुमानम्-घटः पटाद् भिन्नो घटत्वादिति, घटजातीयानामपि भेदो विरुद्धधर्माध्यासादेव, तद्यथा-अयं घट एतस्माद् घटाद् भिन्नो भिन्नकपालारब्धत्वादिति, एवं पटादावपि अयं पट एतस्मात् पटाद् भिन्नो भिन्नतन्त्वारब्धत्वादिति, एवं द्व्यणुकलक्षणाऽऽद्यावयविपर्यन्तं भिन्नावयवाऽऽरब्धत्वाद् भेदः सिद्ध्यति, यथा च द्व्यणुकेऽयं द्व्यणुक एतस्माद् द्व्यणुकाद् भिन्नो भिन्नपरमाण्वारब्धत्वादित्यनुमानं भिन्नावयवारब्धत्वहेतुकं प्रवर्तते न तथा परमाणुषु तेषामवयवाभावेन तदारब्धत्वाभावाच्चिरस्थत्वाच्च, किन्तु परमाणूनां परस्परभेदका विशेषा एव, परमाणूनां भिन्नत्वाच्च तद्वृत्तित्वेन तद्गतगुणानामपि भेदसिद्धिसम्भवेन तेषु विशेषा, विशेषेष्वप्यन्योऽन्यं भेदसिद्धये विशेषान्तरकल्पनेऽनवस्था स्यादतो विशेषाः स्वत एव व्यावृत्ता अभ्युपगम्यन्ते, अनयैव दिशाऽन्येष्वपि नित्यद्रव्येषु विशेषाः सिद्ध्यन्ति, अतिरिक्तविशेषपदार्थकल्पनापेक्षया लाघवान्नित्यद्रव्याण्येव स्वतो व्यावृत्तानि किमिति नाभ्युपेयन्त इति न चोद्यम्,

**नित्यद्रव्याणामपि स्वत एव व्यावृत्तत्वात्, अन्यथा नित्यगुणेष्वपि तत्कल्पनप्रसङ्गात्। आश्रयविशेषेणाऽऽश्रितव्यावृत्तेर्नाऽयं दोष इति चेत्, आश्रितविशेषेणाऽऽश्रयव्यावृत्तिरित्येव किमिति नाद्रियते ?।**

जातिमत्पदार्थानां किञ्चिद्धर्मेणैव व्यावृत्तिरिति नियमेन तेषां स्वतो व्यावृत्तत्वासम्भवात्, स्वतो व्यावृत्तत्वलक्षणरूपपक्षासिद्धिप्रसङ्गमीत्यैव च विशेषेष्वनन्तेष्वपि न जातिः कल्प्यत इत्येवं विशेषसाधके प्रमाणे सति न प्रमाणमस्तीति रिक्तं वच इत्यत आह-विशेषाणामिवेति-एतच्च पराभ्युपगममाश्रित्य, सिद्धान्तेऽतिरिक्तविशेषाणामभावात् दृष्टान्तत्वासम्भवात्। जातिमत्पदार्थानां किञ्चिद्रूपेण व्यावृत्तिरिति नियमस्तु नव्यनैयायिकैरपि नाभ्युपेयत एवेति न तद्यत्नाग्निनित्यद्रव्येषु स्वतो व्यावृत्तत्वासम्भव उद्भावनीयः, यदि च जातिमत्पदार्थानां किञ्चिद्रूपेणैव व्यावृत्तिरिति नियमावष्टम्भादेव नित्यद्रव्येषु व्यावर्तकतया विशेषाः कल्प्यन्ते तदा नित्यगुणेष्वपि ते कल्प्यन्ताम्, तेष्वपि स्वतो व्यावृत्तत्वासम्भवादित्याह-अन्यथेति। तत्कल्पनप्रसङ्गाद् विशेषकल्पनापत्तेः। नन्वेतत्परमाणुरूपमेतस्मात् परमाणुरूपाद् भिन्नम्, भिन्नपरमाण्वाश्रितत्वादित्याश्रयभेदादेव तद्भेदसिद्धिसम्भवान्न नित्यगुणेषु विशेषाः कल्प्यन्त इति वैशेषिकः शङ्कते-आश्रयविशेषेणेति। अथ विशेषकल्पनप्रसङ्गलक्षणः, नित्यगुणेष्वेव विशेषाः कल्प्यन्ताम्, ततो नित्यगुणानां भेदसिद्धौ तदाश्रयत्वादेव नित्यद्रव्यभेदसिद्धिसम्भवान्न नित्यद्रव्येषु विशेषाः कल्पनीया इत्येव किं न स्यादिति समाधत्ते-आश्रितविशेषेणेति।

वेदान्तिशिरोमणिश्रीहर्षमिश्रमतस्याद्वैतसमर्थनप्रवणस्योपदर्शनपुरस्सरमयुक्तत्वं भावयति-सदविशिष्टमेव सर्वमिति-घटः सन्, पटः सन्निति प्रतीत्या वस्तुमात्रं सदभ्युपगन्तव्यम्, न च तस्यां प्रतीतौ नैयायिकाभ्युपगताऽतिरिक्ता सत्ता प्रकारतयाऽवभासते घटादिकं विशेष्यतयेति

"सदविशिष्टमेव सर्वम्" भेदप्रतियोगित्वानुयोगित्वादेः स्वरूपसम्बन्धाऽऽत्मकत्वेनाप्यन्ततो

---

वाच्यम्, यतः–सा सति वर्ततेऽसति वा ?, आद्ये सत्तावत्त्वादेव सदिति स्यादिति धर्मिविशेषणीभूता सत्ताऽऽत्माश्रयभयात् प्रकारीभूतसत्तातोऽतिरिक्तोपगन्तव्या, तस्या अपि सत्येव वृत्तिरित्यनवस्थाप्रसङ्गः, द्वितीयेऽसत्त्वाविशेषात् खरविषाणादावपि सत्त्वं स्यादित्यलीकं किमपि न भवेदतो ब्रह्मैव स्वतः सद्रूपं सन् घट इत्यादिप्रतीतौ तादात्म्येन घटादौ विशेषणतयाऽवभासते, तथा च तदभिन्नाभिन्नस्य तदभिन्नत्वमिति नियमेन घटाभिन्नसदभिन्नस्य पटादेर्घटाभिन्नत्वं पटाभिन्नसदभिन्नघटादेः पटाभिन्नत्वमिति सदात्मना सर्वमद्वितीयमिति सद्विशिष्टमेव सर्वमिति ब्रह्माद्वैतवादिमतमुपपद्यतेतरामित्यर्थः। ननु यथा–सन् घटः, सन् पट इत्यादिसत्प्रतीतिरुपजायते तथा घटः पटाद् भिन्नः, पटो घटाद् भिन्नः, घटः पटो नेत्यादिप्रतीतिरपि सर्वलोकप्रसिद्धा नापलपितुं शक्येति तद्बाधात्नैकान्तेन सद्विशिष्टतैव सर्वस्य वस्तुन इत्यत आह–भेदप्रतियोगित्वानुयोगित्वादेरिति–घटः पटाद् भिन्न इत्यत्र भेदस्यानुयोगितया घटो भासते प्रतियोगितया पट इति, प्रतियोगित्वाऽनुयोगित्वादिकं च यद्यतिरिक्तं तदा तदपि नासम्बद्धमेव सम्बन्धतयाऽभ्युपेयम्, तथा सति पटभेदस्यानुयोगित्वलक्षणसम्बन्धो घटादाविव पटेऽप्यसम्बद्धत्वाविशेषात् स्यादिति पटः पटाद् भिन्न इत्यपि प्रतीतिरापद्येत, सम्बद्धस्यैव सम्बन्धत्वे च तस्यापि सम्बन्धोऽतिरिक्तः सम्बद्धस्य सम्बन्धत्वमित्यनुरोधेनाभ्युपेय इत्यनवस्था स्यादित्यनतिरिक्तमेव स्वरूपसम्बन्धरूपं प्रतियोगित्वाऽनुयोगित्वादिकम्, तथा च भेदस्यानुयोगिना प्रतियोगिना सह स्वरूपसम्बन्धबलादभेदे व्यवस्थिते तदभिन्नाभिन्नस्य तदभिन्नत्वमिति नियमबलात् प्रतियोग्यनुयोगिनोरप्यभेदव्यवस्थितिरिति भेदप्रतीतिरप्यभेदसाधिकैव, एवं "एकमेवाद्वितीयं ब्रह्म" इति श्रुत्या सर्वस्याभेदं गोचरन्त्या घट पटबुद्ध्या

**जगदैक्यपर्यवसानात्, भेदस्याविद्योपकल्पितत्वात् तथैव**

समयमभेदबुद्धेरप्यभेदबुद्धिराधीयत इति भेदाऽभेदबुद्ध्योरभेदे कथं स्वस्यैव स्वबाधकत्वम्, तथा घट-पटभेदैः समं तद्बुद्धेर्भेदो न तद्बुद्ध्यैव विषयीकृत इति तेषामभेदोऽद्वैतश्रुतिजन्यबोधविषय इति ततोऽप्युक्तनियमपरत्वाद् घट-पटयोरभेदव्यवस्थितिरिति यस्य यतो भेदो नाध्यक्षादिना विषयीकृतस्तस्यैव सर्वस्मादभेदस्योक्तश्रुतिजबोधविषयत्वे उक्तनियमात् सर्वाभेदः सिद्ध्यत्येव, यथा च सर्वं ब्रह्माभिन्नमिति प्रतीतिः, तथा-सर्वं सर्वस्मात् भिन्नमिति नहि सम्भवति स्वस्यापि सर्वान्तर्गतत्वेन स्वस्मिन् स्वभेदस्य भेदबाधननुमतत्वात्, उक्तञ्च खण्डनखण्डखाद्ये—

"सुदूरभावनभ्रान्ता बाधबुद्धिपरम्परा ।
निवृत्ताप्यद्वयाम्नायैः पार्ष्णिग्राहैर्विजीयते" ॥१॥

[ परि० १, श्लो० ८ ]

तथा—

"अभेदं नोल्लिखन्ती धीर्न भेदोल्लेखनक्षमा ।
तथा बाधे प्रमा सा स्यान्नासौ स्वापेक्ष्यवैशसात्" ॥२॥

[ परि० १, श्लो० १८ ] इत्यादि ।

तदेतत् सर्वमभिप्रेत्याह-अन्यत इति । यदा चोक्तयुक्तिकदम्बेन सदविशिष्टत्वेन सर्वस्याद्वैतं पारमार्थिकं व्यवस्थितं तदा प्रतीयमानस्य भेदस्यापि सर्वथाऽपलापो न युक्त इति तस्य का गतिरित्यपेक्षायामाह-भेदस्येति-"इन्द्रो मायाभिः" इत्यादिश्रुत्या जगत एव मायापराभिधानाऽविद्योपकल्पितत्वमिति तदन्तर्गतस्य भेदस्याप्यविद्योपकल्पितत्वम्, यदाह श्रुतिः-"द्वैताद् वै भयं भवति", "यदा सर्वमात्मैवाभूत् तदा केन कं पश्येत्" इत्यादि । अविद्योपकल्पितत्वं जगत इत्थं भावनीयम्-ज्ञानाधीनैव ज्ञेयव्यवस्थितिः, ज्ञाने च वस्त्ववभासकत्वादेव तत्र प्रमाण्यम्, असम्बद्धञ्च ज्ञानं न वस्त्ववभासकमिति ज्ञेयेन सह ज्ञानस्य सम्बन्धो वाच्य, देश-कालविप्रकर्षाभाव

श्रुतिस्वरसादित्यद्वैतवादिश्रीहर्षमतमपि न रमणीयम्, भेदस्यावास्तवत्वे तदभावरूपाभेदस्यापि तथात्वात्, तादात्म्यस्यापि जगतः पौनरुक्त्याद्यापत्त्या सर्वथा वक्तु-

यथ च तात्त्विकसम्बन्धव्यापक, ज्ञानस्य च ज्ञेयेन सह देशविप्रकर्षः स्फुटमेव ज्ञानस्यान्तरत्वाज्ज्ञेयस्य च बहिरवस्थितेः, अतीताऽनागतयोरन्यर्थयोर्ज्ञानं भवतीति कालविप्रकर्षोऽपि स्फुटमेवेति न पञ्चक्रियया ज्ञान-ज्ञेययोस्तात्त्विकः सम्बन्धः, व्यापकाभावाद् व्याप्यामापव्यवस्थितेः, किन्तु काल्पनिकः, स च सम्बन्धिनोरेकस्यावास्तवत्वे रज्जु-सर्पयोरिव भवति, तत्रापि अनुगतस्य नावास्तवत्वं किन्त्वननुगतस्यैवेति-घटं जानामि, पटं जानामि, मठं जानामीत्यादौ सर्वत्र ज्ञानमनुगतमननुगतं च घटपटाद्येवेति तदेव रज्जौ सर्पादिकमिव ज्ञाने कल्पितम्, कल्पना च न दोषमन्तरेणेति अविद्यैव तत्र दोषविधया कारणम्, तथैव ज्ञाने परब्रह्मचैतन्यलक्षणे घटपटादिकं कल्पितं भवति, तत एव च ब्रह्मात्मकज्ञानेन सहाध्यासिकस्तादात्म्यसम्बन्धोऽपि कल्पित इति। उक्तमतस्यायुक्तत्वे ग्रन्थकृद्धेतुमुपदर्शयति-भेदस्येति। तदभावेति भेदाभावेत्यर्थः। तथात्वाद् अवास्तवत्वात्। यदि सद्विशिष्टमेव सर्वं यथा घट इत्युक्तस्यैव घटादीनां सर्वेषामर्थानामवबोधसम्भवात् तत्प्रतिपादकं वचनं नोच्चारणीयम्, तदभिधाने पौनरुक्त्यं स्यात्, एवं क्वचिदपि ग्रन्थे आदौ यस्य कस्यचिदपि वाक्यस्योच्चारणे तत एवाशेषग्रन्थप्रतिपाद्यस्यार्थनिचयस्यावबोधसम्भवाद् वाक्यान्तरं नोट्टङ्कनीयम्, हेमचन्द्रसूरिभिश्च "माया सती चेद्" इत्यादिना मायावादोऽपहस्तित एवेत्याशयेनाऽऽह-तादात्म्यस्यापीति-सर्वथा तादात्म्यस्यापीत्यर्थः, तेन कथञ्चित्तादात्म्ये पौनरुक्त्याद्यापत्तावपि न क्षतिः, तथाहि-भेदप्रतियोगित्वाऽनुयोगित्वादेः स्वरूपसम्बन्धात्मकत्वेऽपि स्वरूपसम्बन्धः कथञ्चित्तादात्म्यमेवेति भेदप्रतीत्याऽपि कथञ्चित्तादात्म्यमेव प्रतियोग्यनुयोगिनोः सिद्ध्यति, कथञ्चित्तादात्म्यं च सर्वथा तादात्म्यलक्षण-

मशावपत्यांचेत्यन्यत्र विस्तरः ।

"णेगेहिं माणेहिं, मिणइत्ती य णेगमस्स य निरुत्ती"

त्ति [अनुयोगद्वार]सूत्रम् ।

नैकमानमेयविषयोऽध्यवसायो नैगम इत्येतदर्थः ।

"निगमेषु येऽभिहिताः शब्दास्तेषामर्थः शब्दार्थपरिज्ञानं च देश-समग्रग्राही नैगमः" इति तत्त्वार्थभाष्यम् [अ० १ सू० ३५.] ।

अत्र पूर्वदलं मदुक्तलक्षणकथनाभिप्रायम्, उत्तरदलं च विषयविभागविधानिरूपणाभिप्रायमात्रम् । देशग्रा-

---

मद्वैतं विलक्षणमेव, सद्विशिष्टमेव सर्वमित्यत्र स्यात् सद्विशिष्टमेव सर्वमिति स्याद्वादिभिरुपेयत एव, सन् घट इत्यादिप्रतीतौ चोत्पाद-व्यय-ध्रौव्यात्मकत्वलक्षणसत्त्वमेव प्रकारतया भासते, परोपगतसत्त्वं यथा नोपपद्यते तथोपपादितमेव—"उत्पाद-व्यय-ध्रौव्ययुक्तं सत्" [तत्त्वा० सू० ५, २९.] इति तत्त्वार्थसूत्रव्याख्याने, ग्रन्थगौरवभयादत्र तत्र लेखनी व्यापार्यत इति बोध्यम् ॥

नैगमलक्षणोपदर्शकमनुयोगद्वारसूत्रमुल्लिखति—णेगेहिं इति । उक्तसूत्रार्थमुपदर्शयति—नैकेति । नैगमलक्षण-तद्विभागोपदर्शकं तत्त्वार्थभाष्यमुल्लिखति—निगमेष्विति ।

अत्र अन्तरोपदर्शितभाष्ये । पूर्वदलं निगमेषु येऽभिहिताः शब्दास्तेषामर्थः शब्दार्थपरिज्ञानञ्चेत्यन्तम् । उत्तरदलं देश-समग्रग्राहीति । विषयेति—विषयो विशेषः सामान्यं च, तस्य यो विभागो विभजनमेकत्र प्राधान्येन विशेषविषयत्वमपरत्र प्राधान्येन सामान्यविषयत्वम् तेन यद् विधानिरूपणं देशग्राही विशेषप्रधानो नैगमः, समग्रग्राही सामान्यप्रधानो नैगम इत्येवं नैगमभेदद्वयनिरूपणं तदभिप्रायमात्रं तदभिप्रायकमेव, न तु लक्षणप्रदर्शनम्, लक्षणस्य पूर्वदलेनैव त्वुक्त-

हित्वं विशेषप्रधानत्वम्, समग्रग्राहित्वं च सामान्यप्रधानत्वं पारिभाषिकम्, अन्यथा सामान्य-विशेषयोर्द्वयोरपि वस्त्वेकदेशत्वात् किं द्वैरूप्यं स्यात्?।

एवमस्य प्रमाणत्वं स्यात्, न स्यात्-प्रत्येकं भेदशास्त-

---

स्यात्। उत्तरदलस्य विषयविभजनपरत्वेन द्वैविध्योपदर्शनपरत्वं स्पष्टयति-देशग्राहित्वमिति। एतच्च न कथितः सिद्धमित्यत आह-पारिभाषिकमिति-स्याद्वादाभिज्ञानामाचार्याणां सङ्केतः परिभाषा, तत इदमित्थं ज्ञायत इत्यर्थः। अन्यथा देशग्राहित्वादेर्विशेषप्रधानत्वादिपारिभाषिकस्वरूपाश्रयणेन द्वैविध्यस्यानाश्रयणे। किमिति-वस्त्वेकदेशग्राहित्वमेकरूपमेवेति तद्रूपैकरूप्यमेव न द्वैरूप्यम्, सामान्यमपि वस्त्वेकदेश एव विशेषोऽपि च वस्त्वेकदेश एवेति देशत्वेन विशेष-सामान्ययोरुभयोरपि ग्रहणात् समग्रेति व्यर्थं स्यादतो देशपदं प्रधानीभूतविशेषे पारिभाषिकं समग्रपदं च सामान्ये पारिभाषिकम्, न तु समग्रपदमनन्तधर्मात्मकसम्पूर्णवस्तुस्वरूपपरं तद्ग्राहित्वस्य नयेऽभावादित्यभिसन्धिः।

नन्वेवं नैगमस्य प्राधान्येन विशेषग्राहित्वे प्राधान्येन सामान्यग्राहित्वे च प्रमाणत्वमेव स्यात्, प्रमाणस्यापि प्राधान्येन सामान्य-विशेषग्राहित्वादेव प्रमाणता, तच्चात्राऽप्यविशिष्टमेवेति शङ्कते-एवमिति-प्राधान्येन विशेष-सामान्यग्राहित्वाभ्युपगमे। अस्य नैगमस्य, परन्तु नैगमस्य प्राधान्येन सामान्यग्राहित्वं न तस्य प्राधान्येन विशेषग्राहित्वम्, यस्य च नैगमस्य प्राधान्येन विशेषग्राहित्वं न तस्य प्राधान्येन सामान्यग्राहित्वम्, प्रमाणस्य त्वेकस्यैव प्राधान्येन सामान्यग्राहित्वं प्राधान्येन च विशेषग्राहित्वमित्येवं विशेषस्य सद्भावान्न नैगमस्य प्रमाणत्वापत्तिरिति समाधत्ते-न स्यादिति-नैगमस्य प्रमाणत्वं न प्रसज्यत इत्यर्थः। अत्रैव हेतुमुपदर्शयति-प्रत्येकमिति। भेदतः भेदेन। तदुभयविषयत्वेऽपि सामान्य-विशेषोभयविषयत्वेऽपि, एकस्य सामान्यविषयत्वमेकस्य विशेषविषयत्वमिति कृत्वा सामान्य-

द्युभयविषयत्वेऽपि सम्भूयोभयविषयत्वायोगात्॥

अस्य च चत्वारोऽपि निक्षेपा अभिमताः–नाम, स्थापना, द्रव्यम्, भावश्चेति। घट इत्यभिधानमपि घट एव, "अर्था-ऽभिधान-प्रत्ययास्तुल्यनामधेयाः" इति वचनात्, वाच्य-वाचकयोरत्यन्तभेदे प्रतिनियतपदशक्त्यनुप-

विशेषोभयविषयत्वेऽपीति यावत्। सम्भूयेति–यस्यैव सामान्यविषयत्वं तस्यैव विशेषविषयत्वमित्येवं सम्भूयेत्यर्थः। उभयविषयत्वायोगाद् नैगमनयस्य प्राधान्येन सामान्य-विशेषोभयविषयत्वाभावात्।

नाम-स्थापना द्रव्य-भावरूपनिक्षेपचतुष्टयाभ्युपगन्तृत्वं नैगमनयस्येति दर्शयति-अस्य चेति–नैगमनयस्य पुनः तत्र यस्य कस्यचिद् वस्तुनो घट इति नाम क्रियते स नामघटः, स्वर्गाधिपत्यादिलक्षणेन्द्रपदप्रवृत्तिनिमित्तविधुतोऽपि गोपालदारकः कश्चिद् इन्द्रोऽयमिति सङ्केतितो नामेन्द्रः, घट इति नामाऽपि घट इति नामनिक्षेपः, अयं घटाकार इत्येवं यत् किमपि वस्तु स्थाप्यते स स्थापनाघट इति स्थापनानिक्षेपः। यच्च मृद्द्रव्यं घटरूपेण परिणमिष्यति, अनुभूतघटपरिणामं वा तन्मृद्द्रव्यं घटकारणत्वाद् द्रव्यघट इति द्रव्यनिक्षेपः। यस्य वस्तुनो यदसाधारणस्वरूपं तत् तस्य भाव इति पृथुबुध्नोदराद्याकारः कम्बुग्रीवादिमान् योऽयं घटः स भावघट इति भावनिक्षेपः, इत्येवं चत्वारोऽपि निक्षेपा नैगमनयस्याभिमता इत्यर्थः। नामनिक्षेपाभ्युपगन्तृनयोऽपि नामनिक्षेप इति तन्मते शब्दार्थयोस्तादात्म्यमेव सम्बन्ध इत्यर्थस्य नामरूपतेत्यभिसन्धानेन नैगमनये नामनिक्षेपाभ्युपगममुपपादयति–घट इत्यभिधानमपीति। घटपदवाच्यत्वं यथा भावघटे तथा घटनाम्न्यपीति तद्रूपेण तयोरभेदाद् घटनाम्नो घटत्वमित्याशयेनाऽऽह–अर्थाभिधानेति। घटतन्नाम्नोरभेदे युक्त्यन्तरमप्याह–वाच्य-वाचकयोरिति। स्थापनानिक्षेपाभ्युपगन्तृत्वमुपपादयति–घटाकारेऽपीति, एतच्च सद्भूतस्थापनामधिकृत्य बोध्यम्। अन्यथा घटाकारस्य घटत्वाभावे। तत्संयोगाद् घटतुल्यपरिमाणत्वा-

पत्तेश्च। घटाकारोऽपि घट एव, तुल्यपरिणामत्वात्, अन्यथा तत्त्वायोगात्, मुख्यार्थमात्राभावादेव तत्प्रतिकृतित्वोपपत्तेः। मृत्पिण्डादिद्रव्यघटोऽपि घट एवान्यथा परिणामपरिणामिभावानुपपत्तेः। भावघटपदं चासन्दिग्धवृत्तिकमेव।

ननु नामादीनां सर्ववस्तुव्यापित्वमुपगम्यते, नवा? आद्ये व्यभिचारः, अनभिलाप्यभावेषु नामनिक्षेपा-

लम्भवात्। नन्वेवं स्थापनाघटेऽपि घटत्वे भावघटादस्य कः प्रतिविशेष इत्यपेक्षायामाह–मुख्यार्थेति। द्रव्यनिक्षेपाभ्युपगन्तृत्वमुपपादयति–मृत्पिण्डादीरिति। अन्यथा मृत्पिण्डादेर्घटत्वाभावे, घट परिणामः, मृत्पिण्ड परिणामीत्येवं घट मृत्पिण्डयोर्यः परिणाम परिणामिभावलक्षण सम्बन्ध सोऽतिप्रसङ्गादन्यन्तभेदे न स्यादित्यर्थः। यश्च पृथुबुध्नोदराद्याकारः कम्बुग्रीवादिमान् भावघटस्तस्य घटत्व सर्वानुमतमेवेति तदभ्युपगन्तृत्वमस्य दर्शयति–भावघटपदमिति।

प्रसङ्गानुगतं नामादिविचारमुपजीवन् परः शङ्कते–नन्विति। 'नामादीनाम्' इत्यत्राऽऽदिपदात् स्थापना भाव द्रव्यनिक्षेपाणामुपग्रहः। आद्ये नामादीनां सर्ववस्तुव्यापित्वमिति पक्षे। व्यभिचार–यत्र यत्र वस्तुत्वं तत्र नामनिक्षेपादिचतुष्टयप्रवृत्तिरिति नियमाभाव। अत्रैव हेतुमाह–अनभिलाप्येति–ये शब्देन न वक्तुं शक्या एतादृशा अपि बहवः पदार्था सन्ति, तत्र वस्तुत्वं विद्यते, नामादिनिक्षेपस्तु नास्तीति व्यभिचार इत्यर्थः। ननु यत्र यत्राभिलाप्यवस्तुत्वं तत्र नामादिचतुष्टयमित्येवं नियमे न व्यभिचार इत्यत आह–द्रव्यजीवेति जीवोऽभिलाप्यो द्रव्यं चाभिलाप्यमिति जीवे द्रव्ये चाभिलाप्यवस्तुत्वं वर्तते न तयोर्द्रव्यनिक्षेप, यो भावः पूर्वमजीवः सन् आयत्यां जीवो भवेत् स जीवकारणत्वाद् द्रव्यजीव इति द्रव्यनिक्षेपप्रवृत्तिः संभवेद्, न चैवम्–अजीवस्य जडस्वरूपस्य कदाचिदपि जीवरूपेण

प्रवृत्तेः, द्रव्यजीव-द्रव्यद्रव्याद्यसिद्ध्याऽभिलाप्यभावव्यापितायां अपि वक्तुमशक्यत्वाच्च।

अन्ये "जत्थवि य ण जाणिज्जा, चउक्कयं णिक्खिवे तत्थ" त्ति। [अनु०] सूत्रविरोधः, अत्र यत्तत्पदाभ्यां व्याप्त्युपस्थितेरिति चेत्, अत्र वदन्ति—तत्तद्व्यभिचारस्थानान्यत्वविशेषणान्न दोषः, तदिदमयुक्तम्—यद्येकस्मिन् न सम्भवति, नैतावता भवत्यव्यापितेति। अपरे त्वाहुः—केवलिप्रज्ञारूपमेव नामाऽनभिलाप्यभावेष्वस्ति,

परिणामासम्भवात्, एवं यो जीवपर्यायमनुभूयोत्तरकालमजीवो भवेत् सोऽप्यनुभूतजीवपर्यायत्वाद् द्रव्यजीवः स्याद्, न चैवमपि सम्भवति, एवं गुणपर्यायवियुक्तस्य भावस्य गुणपर्यायवद्रूपेण परिणामो यदि भवेत् तदा द्रव्यद्रव्यं स्याद्, न चैवमपि सम्भवतीति तयोर्द्रव्यनिक्षेपाप्रवृत्तेरभिलाप्यवस्तुव्यापित्वमपि निक्षेपचतुष्टयस्य न सम्भवतीत्यर्थः।

अन्ये नामादीनां न सर्ववस्तुव्यापित्वमिति पक्षे। जत्थ वि०इति—"यत्रापि न जानीयात् चतुष्टयं निक्षिपेत् तत्र" इति संस्कृतम्, चतुष्टयं नामादिचतुष्टयम्। कथं सूत्रविरोध इत्यपेक्षायामाह—अत्रेति, निरुक्तसूत्र इत्यर्थः। तत्रैकेषां समाधानमुपदर्शयति—अत्र वदन्तीति। तदिति, यत्र यत्र वस्तुनि न नामादिनिक्षेपचतुष्टयप्रवृत्तिसम्भवस्तत्तदन्यत्वे सति वस्तुत्वं यत्र तत्र नामादिचतुष्टयमित्येवं नियमाभ्युपगमे न पूर्वोपदर्शितव्यभिचारदोष इत्यर्थः। एवं व्यभिचारोद्धारे प्रमेयत्वादिहेतुरपि वह्निव्याप्यः स्यात्, यत्र यत्र व्यभिचारस्तदन्यत्वे सतीति विशेषणोपादानेन प्रमेयत्वे वह्निव्यभिचारपरिहारसम्भवात्, किन्तु नामादीनां सर्ववस्तुव्याप्तिः प्रायोवादादुच्यते, सा च यत्रचिन्नामादिचतुष्टयाभावेऽपि सम्भविनीत्येतावतैव निर्वाहे मोऽसत्समाधानं युक्तमित्याह—तदिदमयुक्तमिति। वस्तुत एव सर्ववस्तु-

द्रव्यजीवश्च मनुष्यादिरेव, भाविदेवादिजीवपर्यायहेतुत्वात्; द्रव्यद्रव्यमपि मृदादिरेव, आदिष्टद्रव्यत्वानां घटादिपर्यायाणां हेतुत्वादिति; एतच्च मतं नातिरमणीयम्-द्रव्यार्थिकेन शब्दपुद्गलरूपस्यैव नाम्नोऽभ्युपग-

व्यापित्वमभ्युपगच्छतामाचार्याणां समाधानमपदर्शयति-अपरे त्वाहुरिति। केवलीति-केवली सर्वं जानातीत्यनभिलाप्यमपि केवलिप्रज्ञागोचर इति केवलप्रज्ञारूपं नामाऽपि स्ववाच्यविषयतया तत्र वर्तत इति कृत्वा नामनिक्षेपस्तत्र सम्भवतीति नामनिक्षेपस्य सर्ववस्तुव्याप्तिः। द्रव्यनिक्षेपो जीवे द्रव्येऽपि च सम्भवतीति तस्यापि सर्ववस्तुव्याप्तिरित्याह-द्रव्यजीवेति-जीवकारणं द्रव्यजीवो भवितुमर्हतीति जीवो भाविदेवादिजीवपर्यायस्तत्कारणं मनुष्यादिजीव इति कृत्वा मनुष्यादिजीवो द्रव्यजीव इति द्रव्यनिक्षेपस्य जीवे संभव इत्यर्थः। द्रव्येऽपि द्रव्यनिक्षेपसम्भवं दर्शयति-द्रव्यद्रव्यमपीति। घटादिलक्षणमृद्द्रव्य-पर्यायाणामपि प्रतिक्षणमन्यान्यघटपरिणतिलक्षणपर्यायकारणत्वात् द्रव्यत्वमित्येवमादिष्टद्रव्यत्वानां घटादीनां कारणतान्मृदादिर्द्रव्यं भवतीति द्रव्यनिक्षेपो द्रव्ये सम्भवतीत्याह-आदिष्टद्रव्यत्वानामिति-पर्यायार्थिकनयादेशात् पर्यायत्वे सति घटादीनां द्रव्यत्वं द्रव्यार्थिकनयादेशादेव, उत्तरोत्तरस्वपर्यायकारत्वात् तद्गुणमित्याच्च तेषां द्रव्यत्वमादिष्टमत इत्यादिष्टं द्रव्यत्वं येषां ते आदिष्टद्रव्यत्वास्तेषामित्यर्थः। हेतुत्वात् कारणत्वान्मृदादेर्द्रव्यद्रव्यत्वमित्यर्थः। एतन्मतमपि न युक्तमित्याह-एतच्चेति, चकारोऽप्यर्थकः, केवलिप्रज्ञा आत्मनश्चैतन्यस्वरूपं गुणः, तस्य द्रव्यार्थिकनयविशेषेण नैगमेन 'नानुमतं नामत्वम्, तन्नये शब्दात्मकपुद्गलस्यैव नामत्वाभ्युपगमादिति केवलिप्रज्ञामुपादायानभिलाप्यभावेषु नामनिक्षेपसम्भवोपदर्शनं न युक्तमित्याह-द्रव्यार्थिकेनेति। भाविदेवादिजीवपर्यायकारणत्वान्मनुष्यादिजीवस्य द्रव्यजीवत्वमभ्युपगम्यपूनमेव, तथा सति संसारावस्थायामेव सिद्धो भव्यस्यायमनस्य जीवे भावत्वपत्वात् संसारिणां सर्व-

-मात्, मनुष्यादीनां द्रव्यजीवत्वे च सिद्धस्यैव भावजीवत्वप्रसङ्गात्, आदिष्टद्रव्यहेतुद्रव्यद्रव्योपगमे भावद्रव्योच्छेदप्रसङ्गाच्च। गुण-पर्यायवियुक्तः प्रज्ञास्थापितो द्रव्यजीव इत्येकेषां मतम्, एतदपि न सूक्ष्मम्–सतां गुण-पर्यायाणां बुद्ध्यापनयनस्य कर्तुमशक्यत्वात्, नहि घटादिज्ञानापत्ताऽर्थपरिणतिरस्ति। जीवशब्दार्थज्ञस्त-

---

स्यापि द्रव्यजीवत्वमेव स्यात्, सिद्धस्यैवानन्तरं गत्यन्तराभावेन तथाविधजीवत्वकारणत्वासम्भवात् भावजीवत्वं भवेदिति जीवे द्रव्यनिक्षेपसम्भवोऽपि नेत्याह–मनुष्यादीनामिति। घटादीनां पर्यायाणामन्यादिष्टद्रव्यत्वमाश्रित्य तत्कारणत्वेन मृदादिद्रव्यस्य द्रव्यद्रव्यत्वधर्मेण द्रव्ये द्रव्यनिक्षेपसम्भवोपदर्शनमपि न युक्तम्, तथा सति द्रव्यमात्रस्यादिष्टद्रव्यत्वरूपपर्यायकारणत्वेन द्रव्यद्रव्यत्वस्यैव प्राप्त्या भावद्रव्योच्छेदापत्तिरित्याह–आदिष्टेति। यद्यपि "गुणपर्यायवद् द्रव्यम्" [तत्त्वार्थसू० ५. ३७.] इति सहभाविनो गुणाः क्रमभाविनश्च पर्यायाः सर्वदैव द्रव्येऽवतिष्ठन्ते, यदि कदाचिद् गुणो द्रव्ये न स्यात् तदभावनिरूपणमेव गुणस्य न भवेत्, प्रतिक्षणमन्यान्यपर्यायत्वेन परिणमत्येव द्रव्यं नापरिणतम् क्षणमप्यवतिष्ठत इति पर्यायस्य सर्वदा द्रव्येऽभावेऽपि यः कश्चित् पर्यायोऽपि द्रव्ये तिष्ठत्येवेति गुण-पर्यायवियुक्तं द्रव्यं न भवत्येव स्वासाधारणधर्मवैकल्ये स्वाभावप्रसङ्गात्, तथाऽपि बुद्ध्या गुण-पर्यायाभ्यां द्रव्यं पृथक्कृत्य यदा व्यवस्थाप्यते तदा तयोरपि गुणपर्याययोर्बुद्ध्यैव द्रव्यतः पृथक्करणम्, तथा च बुद्ध्याऽपनीतगुण-पर्यायो जीवो द्रव्यजीव इत्येवं जीवे द्रव्यनिक्षेपं केचित् संगमयन्ति, तन्मतस्यायुक्ततोपदर्शनपुरस्सरमयुक्तत्वं भावयति–गुण-पर्यायवियुक्त इति। एतदपि न सूक्ष्मम्–इति–एतन्मतमपि सूक्ष्मधिया विचार्यमाणं नोपपन्नम् इत्यर्थः। यद्येवं बुद्धिभेदेन तथैव पर्यायपरिणतिः स्यात् तदा द्रव्यस्य गुण-पर्यायवि-

ह्यनुपयुक्तो जीवशब्दार्थज्ञस्य शरीरं वा जीवरहितं द्रव्यजीव इति नाऽव्यापिता नामादीनामित्यपि वदन्ति ॥

ननु तथापि नैगमेन नामादिचतुष्टयाभ्युपगमे तस्य द्रव्यार्थिकत्वव्याहतिः स्यात्, द्रव्यार्थिकेन द्रव्यस्यैवाभ्युपगमात्, द्रव्यं पर्यायतया, पर्यायं च गौणतयाभ्युपगच्छन् द्रव्यार्थिकोऽपि भावनिक्षेपसह इति हन्त! तर्हि तदुक्त-

---

युपयस्यक्षुभितो शुण पर्यायपियुक्ताऽपि द्रव्यपरिणतिर्भवेत्, तस्याश्च परिणतेर्द्रव्यद्रव्यत्वसुच्यमान शुच्येताऽपि, न चैवम्—अर्थपरिणतेर्वा नापीनत्पामायादित्याह—नदीति। यादृच्छिकमेति—अर्थोऽन्यथाऽन्यथा च ज्ञानमिच्छामात्रसम्भूत यत् तद् यादृच्छिकज्ञानमित्यर्थः। नामादीना सर्वयस्तुव्यापित्वसमर्थनपरं मतान्तरमुपदर्शयति—जीवशब्दार्थज्ञ इति। तत्र जीवशब्दार्थे। अनुपयुक्त, उपयोगशून्य, जीवशब्दार्थज्ञो यदा ॥ जीवशब्दार्थविषयकोपयोगवान् तदा स द्रव्यमिति यावत्। यदा जीवशब्दार्थं जानाति तदेव जीवशब्दार्थज्ञ, तदानीं च न तत्रानुपयुक्त स, यदा च जीवशब्दार्थं न जानाति तदैव तत्रानुपयुक्तत्वात्तस्य जीवशब्दार्थज्ञ एव न भवतीत्यत कल्पान्तरमाह—जीवशब्दार्थज्ञस्येति एतावता द्रव्यनिक्षेपस्य व्यापिताऽऽवेदिता भवति न तु नामनिक्षेपस्येत्यस्वरसो 'वदन्ति' इत्यनेन सूचित। नैगमस्य द्रव्यार्थिकत्वाद् द्रव्यमात्राभ्युपगन्तृत्वमेव युक्त न पर्यायाभ्युपगन्तृत्वमिति कथ नामादिचतुष्टयाभ्युपगन्तृत्व नैगमनयस्येति शङ्कते—ननु इति। तथापि उक्तदिशा नामादिचतुष्टयस्य सर्ववस्तुव्यापित्वोपपादनेऽपि। तस्य नैगमस्य। द्रव्यमेव योऽभ्युपगच्छेत् स द्रव्यार्थिको भवेद्, अय च पर्यायस्वरूप भावमप्यभ्युपगच्छतीति कथ द्रव्यार्थिक स्यादि यावतेनाऽऽह—द्रव्यार्थिकनेति, तथा चास्य द्रव्यार्थिकत्वमभ्युपगच्छता नामादिचतुष्टयाभ्युपगन्तृत्व नास्तीत्येवाभ्युपगन्तव्यमित्यभिसन्धि। अत्र समाधानं कश्चिदाह—द्रव्यमिति। पर्यायमिति

रीत्या शब्दनया अपि द्रव्यनिक्षेपसहा इति कथम् "भावं चिय सद्दणया, सेसा इच्छंति सव्वणिक्खेवे" त्ति भाष्यो-क्तव्यवस्था ?, एतेन "द्रव्यार्थिक-पर्यायार्थिकयोर्द्वयोस्तुल्य-वादेनोभयाभ्युपगमः, परमाद्यस्य सर्वथाऽभेदेनाऽन्त्यस्य तु सर्वथा भेदेन, ततो नैकस्योभयविषयत्वे विषया-न्तरग्रहार्थमन्यकल्पनानुपपत्तिः, भेदाभेदोपरागेणोभय-

स्थाने 'प्रधानतया' इति पाठो युक्तः। उक्तसमाधानस्यायुक्ततां दर्शयति-इत्येति। त्वदुक्तरीत्येति-द्रव्यार्थिकस्य प्रधानतया द्रव्याभ्युप-गन्तृत्वं गौणतया पर्यायाभ्युपगन्तृत्वमित्यतो भावनिक्षेपसहत्व द्रव्यार्थिकस्य त्वयोक्तम्, तद्दिशा च पर्यायनयत्वेनाभिमताः शब्द-नया अपि शब्दसमभिरूढैवम्भूताः पर्यायं प्रधानतया, द्रव्यं गौणत-याऽभ्युपगच्छन्तो द्रव्यनिक्षेपसहाः स्युरिति शब्दनयानां भावनिक्षे-पमात्राभ्युपगन्तृत्वं भाष्योक्तं कथं सङ्गतं स्यादित्यर्थः। "भावं चिय०" इत्यादिभाष्योल्लेख, "भावमेव शब्दनयाः शेषा इच्छन्ति सर्वनि-क्षेपान्" इति संस्कृतम्। 'एतेन' इत्यस्य 'अपास्तम्' इत्यनेन सम्बन्धः, एतेन पर्यायार्थिकस्य द्रव्यनिक्षेपसहत्वप्रसञ्जनेन। तुल्यवादेन तुल्यतया। उभयाभ्युपगमः द्रव्यपर्यायोभयाभ्युपगमः। तर्हि द्रव्यार्थिकोऽपि पर्या-यार्थिकः स्यात्, पर्यायार्थिकोऽपि द्रव्यार्थिकः स्याद् विषयभेदाभा-वादित्यतस्तयोर्विशेषमुपदर्शयति-परमिति-किन्त्वित्यर्थः। आद्यस्य द्रव्यार्थिकनयस्य। सर्वथाऽभेदेनेति-'उभयाभ्युपगमः' इत्यनुवर्तते। अन्त्यस्य तु पर्यायार्थिकस्य पुनः। सर्वथा भेदेनेति-अत्रापि 'उभयाभ्यु-पगमः' इत्यनुवर्तते। तत द्रव्यार्थिकस्य सर्वथाऽभेदेन द्रव्य-पर्यायो-भयाभ्युपगमात् पर्यायार्थिकस्य सर्वथा भेदेन द्रव्य-पर्यायोभयाभ्यु-पगमाच्च। एकस्य द्रव्यार्थिक-पर्यायार्थिकयोर्मध्यादेकस्य द्रव्यार्थिकस्य पर्यायार्थिकस्य वा। उभयविषयत्वे द्रव्य पर्यायोभयविषयत्वे सति। विषयान्तरग्रहार्थं विषयान्तरस्य सत्त्वे तद्ग्रहार्थम्। अन्यकल्पनानुपपत्तिः

ग्रहार्थमुभयकल्पनावश्यकत्वादिति द्रव्यार्थिकस्यापि पर्यायसहत्वम्" इति अपास्तम्, एवं सति पर्यायार्थिकस्य शब्दादेरपि द्रव्यसहत्वापत्तेः,अत्यन्तभेदाभेदग्राहिणोर्द्वयोः

अन्यनयस्य या कल्पना तस्या अनुपपत्ति, एकनयस्यैकविषयत्वे तत्र याऽविषयविषयान्तरस्य ग्रहार्थं या अन्यनयस्य कल्पना तस्या एकस्यापि उभयविषयत्वे विषयान्तराभावादनुपपत्तिर्या सा ततो नेत्यर्थ। कथं नेत्यपेक्षायामाह-भेदाऽभेदोपरागेणेति-द्रव्यार्थिकेनाऽभेदोपरागेणैव द्रव्य पर्याययोर्ग्रहणं पर्यायार्थिकेन च भेदोपरागेणैव तयोर्ग्रहणम्, तथा चैकेन नयेन भेदोपरागेणैवाभेदोपरागेणैव चोभयग्रहो न तु भेदाऽभेदोपरागेणोभयग्रह इति तदर्थम्। उभयकल्पनावश्यकत्वाद् द्रव्यार्थिक पर्यायार्थिकनयोभयकल्पनाया आवश्यकत्वाद्। इति यस्मात् हेतो, द्रव्य पर्यायोभयविषयकत्वादिति यावत्। एवं सति मन्येक द्रव्यार्थिक पर्यायार्थिकयोर्द्रव्य पर्यायोभयविषयत्वाभ्युपगमे सति। 'शब्दादे' इत्यनाक्षिपदात् समभिरूढैवम्भूतयोरुपग्रहः। द्रव्यसहत्वापत्ते रिति-यथा च द्रव्यार्थिकस्य नैगमस्य पर्यायविषयकत्वात् पर्याय सहत्वतो नामादिनिक्षेपचतुष्टयाभ्युपगन्तृत्वं तथा शब्दादिनयस्यापि पर्यायार्थिकस्य उभयविषयकत्वाद् द्रव्यसहत्वतो निक्षेपचतुष्टयाभ्युपगन्तृत्व प्रसज्यत इति भावनिक्षेपमात्राभ्युपगन्तृत्वं शब्दनयानामभ्युपगमसम्मतं न स्यादित्यर्थ। अपि च द्रव्यनय सामान्य विशेषयोरत्यन्ताभेदमेवाभ्युपगच्छति पर्यायनयस्तयोरत्यन्तभेदमेवाभ्युपैतीति तथाग्राहिणो समुदितयोरपि नययोर्भेदसम्पृक्ताभेदग्राहित्वलक्षण नयत्वमपि न स्याद्, यदि द्वयो नभेदाऽभेदग्राहित्वान्मिथ्यादृष्टित्वमेवापद्येतेत्याह-अत्यन्तभेदाऽभेदग्राहिणोरिति। द्वयो पर्यायार्थिक द्रव्यार्थिकनययो। किन्तु पर्यायेण गुणादिना सम द्रव्यस्यैकान्ताभेदमिच्छतो द्रव्यार्थिकस्य मते द्रव्यपदस्य समानार्थकत्वाद् गुणपद पर्याय पद, तथा च पर्याययो घटपद कलशपदयोर्यथा घट कलश इति प्रयोगे तथा गुणो द्रव्यमिति प्रयोगोऽपि न स्यादित्याह अत्यन्ता-

समुदितयोरपि मिथ्यादृष्टित्वाद्, अत्यन्ताभेदे पर्यायद्वयासहोक्तिप्रसङ्गात्, तथा च "गुणो द्रव्यम्" इति द्रव्यार्थिकनयाभिलापानुपपत्तेः, अत्यन्तभेदेऽपि पर्यायार्थिकेन द्रव्यग्रहे द्रव्यार्थिकस्यान्तर्गडुत्वप्रसक्तेः, एकस्मिन् द्रव्यपक्षे पर्यायार्थिकनयमतेऽपि द्रव्यं सामायिकमित्यस्याविरोधप्रसङ्गात्, एतन्मतस्य भाष्यकृतैव निरस्तत्वाच्चेति चेत्, अत्रोच्यते–अविशुद्धानां नैगमभेदानां नामाद्यभ्युपगमप्रवणत्वेऽपि विशुद्धनैगमभेदस्य द्रव्यविशेषणतया पर्यायाभ्युपगमान्न तत्र भावनिक्षेपानुपपत्तिः, अत एवाऽऽह भगवान् भद्रबाहुः–

---

भेद इति । तथा च पर्यायद्वयाऽसहोक्तौ च । एवं पर्यायार्थिकेनाऽत्यन्ताभिन्नतया द्रव्य-पर्याययोरवगाहने यथा पर्यायग्रहार्थं पर्यायार्थिकातिरिक्तस्य नापेक्षा, तथा द्रव्यग्रहार्थमपि द्रव्यग्रहस्यापि तेनैव भावाविति, द्रव्यार्थिकस्य व्यर्थत्वमापद्येतेत्याह–अत्यन्तभेदेऽपीति । अन्तर्गडुत्व निष्प्रयोजनत्वम् । तथा पर्यायार्थिकस्य द्रव्यविषयत्वे द्रव्यसामायिकमपि तदिष्टं भवेदिति द्रव्यार्थिकस्यैव द्रव्यसामायिकमिति न स्यादित्याह–एकस्मिन् द्रव्यपक्ष इति–पर्यायार्थिको द्रव्यमप्यभ्युपगच्छति गुणादिकमपीति तस्य द्रव्याभ्युपगमपक्ष इत्यर्थः । एतन्मतस्य अत्यन्ताऽभिन्नतया द्रव्य पर्यायौ द्रव्यार्थिकोऽभ्युपगच्छति, अत्यन्तभिन्नतया तौ पर्यायार्थिकोऽभ्युपगच्छतीति मतस्य । समाधत्ते–अत्रोच्यत इति । अत्र नैगमस्य निक्षेपचतुष्टयाभ्युपगन्तृत्वे द्रव्यार्थिकत्वहानिरिति प्रश्ने । उच्यते तत्प्रतिविधानमभिधीयते । 'द्रव्यविशेषणतया' इत्युक्त्या विशेष्यतया द्रव्यस्यैवाभ्युपगम इति द्रव्यार्थिकत्वमित्यावेदितम् । तत्र नैगमे । अत एव नैगमनये द्रव्यविशेषणतया पर्यायाभ्युपगमादेव ।

"जीवो गुणपडिवन्नो णयस्स दव्वट्ठियस्स सामइयं" ति [आव० नि० गा० ७९२, विशेषाव० नि० गा० २६४३]। न चैवं पर्यायार्थिकत्वापत्तिः, इतराविशेषणत्वरूपप्राधान्येन पर्यायानभ्युपगमात्। शब्दादीनां पर्यायार्थिकनयानां तु नैगमवदविशुद्ध्यभावान्न नामाद्यभ्युपगन्तृत्वम्, अवास्तवतद्विषयत्वं तु नोक्तविभागव्याघातायेति पर्यालोचयामः। ननु तथापि—

"णामाइतियं दव्वट्ठियस्स भावो अ पज्जवणयस्स" त्ति [विशेषाव० भा० गा० ७५] पूर्वमभिधाय पश्चात्-

जीवो० इति-"जीवो गुणप्रतिपन्नो नयस्य द्रव्यार्थिकस्य सामायिकम्" इति संस्कृतम्। ननु नैगमस्योक्तदिशा पर्यायाभ्युपगन्तृत्वे पर्यायार्थिकत्वं प्रसज्येत इत्याशङ्कां प्रतिक्षिपति-न चैवमिति। एवं नैगमस्य द्रव्यविशेषणतया पर्यायाभ्युपगन्तृत्वे। इतराविशेषणतया पर्यायाभ्युपगन्तृत्वलक्षणप्राधान्येन पर्यायाभ्युपगन्तृत्वे सत्येव पर्यायार्थिकत्वस्येष्टत्वेन नैगमे द्रव्यविशेषणतयैव पर्यायाभ्युपगन्तृत्वस्योपगमेन पर्यायार्थिकत्वापत्त्यसम्भवादित्याह-इतरेति। शब्दनयानां निक्षेपचतुष्टयाभ्युपगन्तृत्वाभावं सहेतुकमुपदर्शयति-शब्दादीनामिति। ननु नैगमस्य प्रधानतया पर्यायविषयकत्वाभावेऽपि गौणतया पर्यायविषयकत्वसत्त्वात् तावताऽपि पर्यायार्थिकत्वं भवेदित्यत आह-अवास्तवेति। तद्विषयत्वं पर्यायविषयत्वम्। नोक्तविभागव्याघातायेति, नैगमादयो द्रव्यार्थिकाः ऋजुसूत्रादयः पर्यायार्थिका इत्येवमुक्तो यो नयविभागस्तद्विघाताय नेत्यर्थः। ननूक्तदिशा नैगमनयस्य निक्षेपचतुष्टयाभ्युपगन्तृत्वे व्यवस्थापितेऽपि द्रव्यार्थिकस्य पूर्वं नामादिनिक्षेपत्रयाभ्युपगन्तृत्वकथनं पश्चान्निक्षेपचतुष्टयाभ्युपगन्तृत्वकथनं च भाष्यकृता विरुद्धाभिप्रायकमिति शङ्कते-नन्विति। णामाइतियं० इति-"नामादित्रिकं

भावं चिय सद्दणया सेसा इच्छंति सव्वणिक्खेवे" ॥ [विशेषाव० भा० गा० २८४७] तथा-"सव्वणया भावमिच्छंति" [विशेषाव० भा० गा० ३६०१] त्ति वदतां भाष्यकृतां कोऽभिप्राय इति चेत्, अयमभिप्रायः-पूर्वं शुद्धचरणोपयोगरूपभावमङ्गलाधिकारसम्बन्धान्नैगमादिना जलाहरणादिरूपभावघटाभ्युपगमेऽपि घटोपयोगरूपभावघटानभ्युपगमात् तथोक्तिः, पृथगनिक्षेपाच्च न प्रत्ययस्याभिधानतुल्यता, अग्रे तु व्यवस्थाधिकाराद् विशेषोक्तिरिति, मुख्यस्वरूपस्यानन्येण नत्यादित्रयविषयत्वमेव द्रव्यार्थिकस्येत्यभिप्रेत्य मतान्तरेण वा तथोक्तिः, अत एव

द्रव्यार्थिकस्य भावश्च पर्यायनयस्य" इति संस्कृतम्। भावं चिय०इति-"भावमेव शब्दनयाः शेषा इच्छन्ति सर्वनिक्षेपान्"। सव्व० इति-"सर्वे नया भावमिच्छन्ति"। भाष्यकृतामभिप्रायस्योपवर्णनेनोत्तरयति-अयमभिप्राय इति। पूर्वमिति-'णामाइतियं' इत्यादिना पूर्वं यद् द्रव्यार्थिकस्य नामादिनिक्षेपत्रयाभ्युपगन्तृत्ववचनं तच्छुद्धचरणोपयोगरूपभावमङ्गलाधिकारसम्बन्धात्, उपयोगलक्षणभावाभ्युपगमश्च न नैगमादेः, जलाहरणाद्यर्थक्रियाकार्येव भावघट इति नैगमादेरभ्युपगमः, न तु घटोपयोगो भावघट इति तदभ्युपगमः। तथोक्तिः "णामाइतियं दव्वट्ठियस्स" इत्युक्तिः। "अर्थाऽभिधान-प्रत्ययास्तुल्यनामधेयाः" इति वचनान्नाम्नो नैगमाभ्युपगमविषयत्वे तत्तुल्यत्वादुपयोगस्यापि नैगमाभ्युपगमविषयत्वमास्थेयमिति न शङ्कयम्, नामनिक्षेपवदुपयोगनिक्षेपस्य पृथगनङ्गीकारेणोपयोगस्य नामतुल्यत्वाभावादित्याह-पृथगनिक्षेपाच्चेति। अग्रे तु पश्चात् पुनः। व्यवस्थाधिकाराद् अस्य नयस्यैतन्निक्षेपाभ्युपगन्तृत्वमित्येवं व्यवस्थाधिकारात्। विशेषोक्ति "भावं चिय०" इत्याद्युक्तिः। इतीति-स्वरूपवचनम्, एवंस्वरूपोऽभिप्राय इत्यर्थः। मुख्यत्वेति-अत्र वा अथवा मतान्तरेण भाष्यकर्तृमतभिन्नमतेन मुख्यत्व-

तत्त्वार्थवृत्तावपि–"अत्र चाद्या नामादयस्त्रयो विकल्पा द्रव्यार्थिकस्य तथा तथा सर्वार्थत्वात्। पाश्चात्यः पर्यायनयस्य तथापरिणति-विज्ञानाभ्याम्" इति [अ. १. सू. ५.]। एतन्मतावष्टम्भेनैव–

"जीवो गुणपडिवन्नो णयस्स दव्वट्ठियस्स सामइयं।
सो चेव पज्जवणयट्ठियस्स जीवस्स एस गुणो" ॥

[आवश्यकनिर्यु० गा० ७९२, विशेषावश्यकनिर्यु० गा० २६४३] इत्यावश्यकगाथा 'किं द्रव्यं गुणो वा सामायिकमिति चिन्तायां द्रव्यार्थिकनयमते गुणं प्रतिपन्नो जीवः सामायिकम्, पर्यायार्थिकनयमते तु जीवस्य गुण एव सामायिकमित्युत्तरम्, अत्र च द्रव्य–पर्यायनययोः शुद्धद्रव्य-पर्यायावेव विषयौ, तत्र पर्याय-द्रव्ययोर्विभि-

रूपस्वातन्त्र्येण नामादित्रयविषयत्वमेव द्रव्यार्थिकस्येत्यभिप्रेत्य तथोक्तिरित्यन्वयः। तथोक्ति "नामाइतियं दव्वट्ठियस्स" इत्युक्तिः। अत एव मतान्तराश्रयणात् पथ। तथा तथा नामादिविप्रकारतः। सर्वार्थत्वात् धर्ममात्रव्यापित्वाद्, द्रव्यार्थिकनयो नाम-स्थापना द्रव्यरूपैः स्वनैरार्थं प्रवर्तत इत्यर्थः। पाश्चात्य भावनिक्षेप.। तथापरिणति विज्ञानाभ्यामिति-वर्तमानपर्याय एव भाव., वस्तु च प्रतिक्षणं परिणमदेवास्ते, प्रतिक्षणमन्यदन्यदेव भवतीति गम्यते च तथैवेति यत्र प्रतिक्षणमन्यत्वं यच्च तज्ज्ञानं तदेव भाव, स एव च पर्यायनयस्य विषय इति। एतन्मताश्रयेणैव मुख्यत्वरूपस्वातन्त्र्येण नामादित्रयविषयत्वमेव द्रव्यार्थिकस्येति मतावष्टम्भेनैवेत्यर्थः। "जीवो०" इत्यादिपूर्वार्धस्य संस्कृत दर्शितमेव। "सो चेव०" इति–"स एव पर्यायनयस्य जीवस्य एष गुणः" इति। इत्यावश्यकगाथा इत्यस्य व्यवस्थेति सम्बन्धः। तद्व्याख्यानमुपदिशति–किं द्रव्यमित्यादिना। अत्र च एतन्मते च। एवे-

द्वयोः कल्पितयोः कुण्डलतापन्नं स्वर्णम्, पत्रस्य नीलतेत्यादाविव विशेषणतयाभिधानं तु न स्वविषयव्याघातायेत्यभिप्रायेण महता प्रबन्धेन भाष्यकृता व्याख्याता। मतान्तराभिप्रायेण तु पर्यायार्थिक एव द्रव्यस्य कल्पितस्य विशेषणत्वम्, द्रव्यार्थिके तु प्रागुपदर्शितदिशा पर्यायस्याकल्पितस्यापि विशेषणत्वं न्याय्यमेव। न च नये विशेषणं कल्पितमेवेति नियमः–

"सावज्जजोगविरओ तिगुत्तो छसु संजओ।
उवउत्तो जयमाणो आया सामाइयं होइ" ॥१४९॥

[आवश्यकमूलभाष्यगाथा, 'दे॰ला' ३२७ तमपृष्ठाग्रभागे]

स्यादि-द्रव्यनयविषये शुद्धद्रव्ये विभिन्नस्य कल्पितस्य पर्यायस्य विशेषणतयाऽभिधानं कुण्डलतापन्नं स्वर्णमित्यादाविव, पर्यायनयविषये शुद्धपर्याये विभिन्नस्य कल्पितस्य द्रव्यस्य विशेषणतयाऽभिधानं पत्रस्य नीलतेत्यादाविव न स्वविषयविघातायेत्यर्थः। स्वयं ग्रन्थकृदाह–मतान्तरेति यन्मते द्रव्यार्थिकस्य चत्वारोऽपि निक्षेपा अभिमताः पर्यायार्थिकस्य तु भावनिक्षेपोऽनुमतस्तन्मताभिप्रायेणेत्यर्थः। पर्यायार्थिक एवेति–पर्यायार्थिके कल्पितस्य द्रव्यस्य विशेषणत्वे वस्तुतो द्रव्यं नास्त्येव, भाव एव [illegible] वस्तुतः समस्तीति भावनिक्षेपाभ्युपगन्तृत्वमेव पर्यायस्येत्यर्थात् प्राप्तमेव। द्रव्यार्थिके त्विति–द्रव्यार्थिकेऽकल्पितस्यापि पर्यायस्य विशेषणत्वे पर्यायोऽपि वस्तुतः समस्तीति निक्षेपचतुष्टयाभ्युपगन्तृत्वमर्थाद् द्रव्यार्थिकस्य प्राप्तमेवेत्यभिसन्धिः। नयेऽकल्पितस्य विशेषणत्वं न सम्भवतीत्याशङ्क्य प्रतिक्षिपति–न चेति। निषेधे हेतुमाह–सावज्ज॰ इति–"सावद्ययोगविरतः त्रिगुप्तः षट्सु संयतः। उपयुक्तो यतमान आत्मा सामायिकं भवति" इति

इत्थञ्च संग्रहनयस्वीकृतात्मसामान्यसामायिकविधिनियमनाय प्रवृत्तानां पर्यायशुद्धिमतां व्यवहारादिनयानां यावदेवंभूतमुत्तरोत्तरपर्यायकदम्बकविशेषणोपरागेणैव प्रवृत्तिदर्शनात्। न च तत्र पर्यायनयानां संग्रहस्वीकृतविधिविशेषपर्यवसानार्थं पर्यायविशेषणमुद्रया प्रवृत्तावपि 'सविशेषण०' इत्यादिन्यायाच्छुद्धपर्यायविधावेव तात्पर्यात्, अन्यनयविधिनियमानुदेशलक्षणस्वातन्त्र्येण नयानां स्वविषयनिर्देशे विशेषणस्य कल्पितत्वनियम

सस्त्वतम्। अत्र निरुक्तायत्यकगाथायाम्। मत्थेति–संग्रहनयस्वीकृतो य आत्मसामान्य सामायिकमिति विधिस्तन्नियमनाय न सर्वं यथा स्यात् सामायिकं किन्तु सावद्ययोगविरतत्वादिविशेषणं स सामायिकमित्येवंभूतनियमार्थम्। यावदेवम्भूतम् एवम्भूतनय यावत्। अन्नये विशेषणं कल्पितमेवेति नियमवादिनोऽभिप्रायमाशङ्क्य प्रतिक्षिपति–न चेति–अस्य 'वाच्यम्' इत्यनेन सम्बन्ध। तत्र 'सावज्ज०' इत्यादिगाथायाम्। 'पर्यायनयानाम्' इत्यस्य 'प्रवृत्तावपि' इत्यनेनान्वय। सविशेषण० इत्यादीति–"सविशेषणौ विधि निषेधौ विशेषणमुपसङ्क्रामत' इति न्यायादित्यर्थः, पर्यायविशिष्टात्मसामान्यसामायिकविधौ तात्पर्यं सत्येव पर्यायाणां विशेषणत्वं भवेत्, यदा तु पर्यायविधावेव तात्पर्यं तदा तेषां विशेषणत्वमेव नास्तीति कल्पितत्वाभावेऽपि न क्षतिरित्यभिप्राय। एवं सति क्व विशेषणस्य कल्पितत्वनियमप्रवृत्तिरित्यपेक्षायामाह–अन्यनयेति–प्रवृत्ते तु अन्यनयसंग्रहस्तेन स्वीकृतस्यात्मसामान्यसामायिकविधेर्नियमोद्देशेनैव व्यवहारादीनां स्वविषयनिर्देश इति स्वातन्त्र्याभावात्तदोक्तनियम इति। सामान्यं यथा सङ्ग्रहस्य विषयस्तथा विशुद्धनैगमस्यापीति स्वविषयनिरूपणविषयत्वरूपमन्यत्व नैगमापेक्षया न सङ्ग्रहस्येति सङ्ग्रहनयस्वीकृतसामान्यविधिनियमनाय प्रवृत्तानां नैगमभेदानां पर्याय

एवेति वाच्यम्, तथाप्यन्यत्वस्य स्वविषयविलक्षणविषयत्वरूपस्य निवेशेन नैगमभेदेषु विशुद्धनैगमे विशेषणस्य पर्यायस्याकल्पितत्वसिद्धेरप्रत्यूहत्वादित्यस्माभिरनुशीलितः पन्थाः समाकलितस्वसमयरहस्यैर्दिव्यदृशा निभालनीयः ॥१॥

" नैगमाद्युपगतार्थसङ्ग्रहप्रवणोऽध्यवसायविशेषः सङ्ग्रहः" । सामान्यनैगमवारणाय नैगमाद्युपगतार्थपदम् । सङ्ग्रहश्च विशेषविनिर्मोकोऽशुद्धविषयविनिर्मोकश्चेत्यादि-

---

विशेषणोपयोगेन प्रवृत्तिसम्भवात् नयान्यनयविधिनियमाद्युद्देश्यलक्षणस्यातन्त्र्याभावाचोक्तनियमप्रवृत्तिरिति विशेषणस्य पर्यायस्याकल्पितत्वसिद्धिः स्यादेवेति नैगमे निक्षेपचतुष्टयाभ्युपगन्तृत्वं युक्तमेवेत्याह-तथापीति । स्वसमीक्षितोक्तमार्गस्य सूक्ष्मशेमुषीगम्यत्वाय-बोधनायाह-समाकलितेति । समाकलितस्वसमयरहस्या अपि नापरेतत उक्तमार्गमवबोद्धुं प्रभविष्णव इत्यत उक्तम्-दिव्यदृशेति ॥

इति नैगमलक्षणनिरूपणम् ॥

अथ सङ्ग्रहनयलक्षणनिरूपणम्—

सङ्ग्रहलक्षणमुपदर्शयति-नैगमेति—विशेष इत्यन्तं लक्षणम्, सङ्ग्रह इति लक्ष्यनिर्देशः । सङ्ग्रहप्रवणोऽध्यवसायविशेषः सङ्ग्रह इत्येतावन्मात्रोक्तौ सामान्यनैगमस्यापि सङ्ग्रहप्रवणत्वात् तत्रातिव्याप्तिवारणाय नैगमाद्युपगतार्थेत्युक्तमित्याह-सामान्येति । नैगमाद्युपगतार्थस्य सङ्ग्रहः किंस्वरूप इत्यपेक्षायामाह-सङ्ग्रहश्चेति-नैगमनयो हि सामान्यं विशेषं चाभ्युपगच्छतीति तदुपगतार्थः सामान्य विशेषश्च, तत्सङ्ग्रहश्च विशेषपरित्यागेन सामान्योररीकारः, एवं व्यवहारादिनया विशेषमुपयन्ति ततस्तदुपगतार्थो विशेषः, तत्सङ्ग्रहोऽपि

एवेत्यभिमन्यते। जगदैक्ये घट पटादिभेदो न स्यादिति चेत्, न स्यादेव वास्तवः, रज्जौ सर्पभ्रमनिबन्धनसर्पादिवदविद्याजनितोऽनिर्वचनीयस्तु स्यादेवेत्याद्या एतन्मूलिका औपनिषदादीनां युक्तयः। अस्यापि चत्वारो निक्षेपा अभिमताः। ये त्वाहुः–"नायं स्थापनामिच्छति, सङ्ग्रहप्रवणेनानेन नामनिक्षेप एव स्थापनाया उपसङ्ग्रहात्। न च "नामं आवकहियं, ठवणा इत्तरिआ वा होज्जा आवकहिया वा होज्ज" [अनु०सू०७] इत्येवानयोर्विशेषाभिधानात् कथं

भिन्नयते एव स्वीकुरुते। एतदेव प्रश्नोत्तराभ्यां प्रपञ्चयन्नाह–जगदैक्य इति–सर्पस्य भवनात्मकत्वे भवनस्य महासामान्यसत्तारूपस्यैकत्वात् तद्रूपस्य जगत एवैक्य इत्यर्थः। न स्यादेव वास्तव वास्तवो घट पटादिभेदो न भवेदेवेत्यर्थः। वास्तवघट पटादिभेदनिषेधे कल्पितो घट पटादिभेदोऽनुमत, स एव तु कीदृगित्यपेक्षायामाह–रज्जाविति–स्पष्टम्। निक्षेपचतुष्टयाभ्युपगन्तृत्व नैगमवदेव सङ्ग्रहस्येत्याह–अस्यापीति–सङ्ग्रहस्यापीत्यर्थः। स्थापनाभ्युपगन्तृत्व न सङ्ग्रहस्येत्याचार्यदेशीयाना मत प्रतिक्षेप्तुमुपन्यस्यति–ये त्वाहुरिति– सोऽयं विशेषो नाम स्थापनासाधारण एव सगृह्णातीति' इत्यन्तमेतन्मतपरिष्कार। अय सङ्ग्रहनय। एतन्नये किं स्थापनैव नास्ति येन तन्निक्षेपस्याभ्युपगम इत्यपेक्षायामाह–सङ्ग्रहप्रवणेनेति। अनेन सङ्ग्रहनयेन। 'न च' इत्यस्य 'आशङ्कनीयम्' इत्यनेनान्वय। नाममिति– नाम यावत्कथिक स्थापना इत्वरिका वा भवेद् यावत्कथिका वा भवेद्" इति संस्कृतम्, यावत्कथिक यावद्द्रव्यभावि, यथा–मेर्वादिनाम यावन्मेर्वादिनं तावत्कालस्थायि। इत्वरिका यस्य स्थापना तस्मिन् सत्येव विनाशिनी, यथा–इन्द्रादिप्रतिकृति, स्थापनावत इन्द्रादे सत्त्वेऽपि काष्ठादिनिर्मिता भित्त्यादिगतलेप्योपलेप्यादिजनितचित्रविशेषस्वरूपा चेन्द्रादिप्रतिकृतिर्विनाशिनी। अनयो नाम स्थापनयो। नाम्नोऽपि

मैकरूप्यमित्याशङ्कनीयम्, पाचक-याचकादिनाम्नामप्य-यावत्कथिकत्वात् तदव्यापकत्वात् स्थूलभेदमात्रकथनम्। पदप्रकृति-कृतिभ्यां नाम-स्थापनयोर्भेद इति चेत्, कथं तर्हि गोपालदारके नामेन्द्रत्वम्? अथ नामेन्द्रत्वं द्विविधम्, इन्द्र इति पदत्वमेकमपरं चेन्द्रपदसङ्केतविषयत्वम्, आद्यं नास्ति, द्वितीयं च पदार्थ इति न दोष इति चेत्, तर्हि व्यस्तया-

यावत्कथिकत्वं न सर्वनामव्यापकं यदैव पाकं करोति पुरुषस्तदैव पाचक इति नाम्ना व्यपदिश्यते, यदैव याचते तदैव याचक इति नाम्ना व्यपदिश्यते इति पाचक-याचकादिनाम्नामयावत्कथिकत्व-लक्षणेतरस्वरूपस्यापि भावादित्याह-पाचकेति। तदव्यापकत्वाद् यावत्कथिक-त्वस्य नामाव्यापकत्वात्। कथं तर्हि सूत्रे नाम्नो यावत्कथिकत्व-कथनमत आह-स्थूलभेदमात्रकथनमिति-बहूनां नाम्नामित्थम्भूतानामेवो-पलम्भात् तथा कथनमित्यर्थः। नाम पदस्वरूपं स्थापना कृतिरूपा आकृतिविरचनारूपेति तयोर्भेद इत्याशङ्कते-पदप्रकृति कृतिभ्यामिति-पद-प्रकृतिः पदस्वभावः कृतिराकृतिरचना ताभ्यामित्यर्थः, अत्र 'पद-प्रतिकृतिभ्याम्" इति पाठो युक्तः, तत्र प्रतिकृतिः प्रतिमा। अत्र तटस्थः पृच्छति-कथं तर्हीति-यदि पदस्वरूपं नाम तर्हि गोपाल-दारको नाक्षरसन्निवेशविशेषलक्षणं नामेति तत्र नामेन्द्रत्वं कथम्? अर्थात् तत्र नामेन्द्रत्वं न भवेदित्यर्थः। तत्रोत्तरमाशङ्कते-अथेति। आद्यमिन्द्र इति पदत्वं नास्ति गोपालदारके न वर्तते। द्वितीयं च इन्द्र-पदसङ्केतविषयत्वं च। पदार्थ इति-पदार्थे गोपालदारकादौ द्वितीय-मिन्द्रपदसङ्केतविषयत्वलक्षणं नामेन्द्रत्वं समस्तीति न तस्य नामे-न्द्रत्वानुपपत्तिलक्षणो दोष इत्यर्थः। इन्द्रपदसङ्केतो यथा गोपाल-दारके क्रियते तथेन्द्रस्थापनायामपीति तस्या अपि नामेन्द्रत्वं स्यादेवेति नामनिक्षेप एव स्थापनाया अन्तर्भाव इत्याह-तर्हीति। व्यस्तयेति-"व्यक्त्याकृति-जातयः पदार्थः" [१] इति गौतमीयं सूत्रम्,

कृति-जातीनां पदार्थत्वेनेन्द्रस्थापनाया अपीन्द्रपदसङ्केतविषयत्वात् कथं न गोपालदारकवन्नामेन्द्रत्वम्? नाम-भावनिक्षेपसाङ्कर्यपरिहाराय [आकृतिभिन्नत्वे सति] इन्द्रपदसङ्केतविषयत्वं नामेन्द्रत्वं निरुच्यत इति चेत्, हन्त! तर्हि सोऽयं विशेषो नामस्थापनासाधारण एव सङ्गृह्यतामिति" ते न विचारचञ्चुरधियो देवानांप्रियाः, उपचाररूपसङ्केतविशेषग्रहे द्रव्यनिक्षेपस्याप्यनतिरेकप्रसङ्गात्,

तदनुसारेणाकृतावपि पदार्थत्वं समस्तीति। इन्दनाद्यर्थक्रियाकारी भावेन्द्रः, नामेन्द्रश्च यत्रेन्द्रपदसङ्केतः क्रियते स इति भावेन्द्रा-नामेन्द्रस्य व्यवच्छित्तये भावेन्द्रव्यावृत्तमेव नामेन्द्रत्वं निरुच्यते, तथैवं च आकृतौ नामेन्द्रत्वं मा प्रसाङ्क्षीदित्येतदर्थमाकृतिभिन्नत्वे सतीति विशेषणमुपादीयत इति न नामनिक्षेपे स्थापनाऽन्तर्भाव इत्याशङ्कते-नामेति-आकृतिभिन्नत्वे सतीत्युपादानेऽपि भावव्यावृत्तिः सङ्केतविशेषाश्रयणादेव कथमन्यथा भावेन्द्रेऽपीन्द्रपदसङ्केतविषयत्वस्य सत्त्वात् भाव-नामनिक्षेपसाङ्कर्यपरिहार इति भावनीयम्। नाम-भावनिक्षेपसाङ्कर्यपरिहाराय नामनिक्षेपनिरुक्तौ भावव्यावर्तकस्य सङ्केतविशेषस्यैवावश्यकता, तस्यानुपादाने च नाम स्थापनयोरेकरूपेण सङ्ग्रहः स्यादेवेति समाधत्ते-हन्तेति। उक्तमर्थं प्रतिपक्षति-न इति, सङ्ग्रहः स्थापनां भवद्भिरभ्युपगन्तव्य इत्यर्थः। उपचारेति-इन्द्रपदसङ्केतविषयत्वं नामेन्द्रत्वमित्यत्रोपचारलक्षणः सङ्केतविशेषो यदि परिगृह्यते तदा भावेन्द्रे इन्द्रपदस्य मुख्य एव सङ्केतो नोपचार इति भावेन्द्रव्यावृत्तिर्यद्यपि भवति तथापि भावनिक्षेपे गोपालदारके इन्द्रस्थापनायां च यथोपचारलक्षण इन्द्रपदसङ्केतस्तथा भावीन्द्रपर्यायस्यानुभूतेन्द्रपर्यायस्य च द्रव्येन्द्रेऽपि वर्तते इति द्रव्यनिक्षेपस्यापि नामनिक्षेप एवान्तर्भावप्रसङ्गात् सङ्ग्रहः स्थापनामिव द्रव्यमपि न स्यात्पृथगिति भावः। द्रव्यनिक्षेपव्यावृत्त एव सङ्केत-

याहच्छिकविशेषोपग्रहस्य चाप्रामाणिकत्वात्, पित्रादिकृतसङ्केतविशेषस्यैव ग्रहणान्नाम-स्थापनयोरैक्यायोगात्। एवं च बहुषु नामादिषु प्रातिस्विकैकरूपाभिसन्धिरेव सङ्ग्रहव्यापार इति प्रतिपत्तव्यम् । यदृच्छयैव सङ्ग्रहस्वीकारे तु नाम्नोऽपि भावकारणतया कुतो न द्रव्यान्तर्भाव इति वाच्यम्?। द्रव्यं परिणामितया भावसम्बद्धम्, नाम

विशेष आद्रियत इति न नाम्नि द्रव्यनिक्षेपप्रवेश इति यदि परो ब्रूयात् तत्राह-यादृच्छिकेति। भावेन्द्रे इन्द्रपदसङ्केत ऐश्वर्यविशेषयोगादेव न तु पित्रादिकृतः, इन्द्रपदसङ्केतविषयत्वलक्षणनामेन्द्रत्वे च पित्रादिकृतसङ्केतविशेष एव प्रविष्ट इति तेन यथा भावेन्द्रव्यावृत्तिस्तथा स्थापनेन्द्रस्यापीति न स्थापनाया नाम्न्यन्तर्भाव इत्याह-पित्रादीति । ननु सङ्ग्रहेणापि निक्षेपचतुष्टयाभ्युपगमे न केनापि कस्यापि सङ्ग्रह इति सङ्ग्रहलक्षणव्यापाराभावे कथमस्याभ्युपगमस्य सङ्ग्रहीयत्वमित्यत आह-एवं चेति-सङ्ग्रहेणापि निक्षेपचतुष्टयाभ्युपगमे चेत्यर्थः। बहुष्विति-नाम्नां बहुत्वात् तेषु नामत्वेन रूपेणैक्याभिसन्धिः, स्थापनानां बहुत्वात् तासु स्थापनात्वेनैक्याभिसन्धिरित्येवं,सङ्ग्रहव्यापारसद्भावादुक्ताभ्युपगमस्य सङ्ग्रहीयत्वमित्यर्थः । उक्तदिशा सङ्ग्रहव्यापारमनभ्युपगम्य स्वोत्प्रेक्षितसङ्केतविशेषतो नाम-स्थापनयोरैक्येन सङ्ग्रहणस्यैव सङ्ग्रहव्यापारतयाऽऽश्रयणे दूषणमाह-यदृच्छयैवेति। भावकारणतयेति-द्रव्यस्य भावकारणत्वं सर्वसम्मतमेव, नामापि चात्यन्तभक्तिनिर्भरमानसेनाभ्यस्यमानं कालान्तरे भावस्वरूपावाप्तिनिबन्धनं भवत्येव कस्यापि पुरुषधौरेयस्येति भावकारणत्वेन नाम द्रव्ययोरैक्याध्यवसायलक्षणसङ्ग्रहव्यापारसद्भावान्नाम्नो द्रव्येऽन्तर्भाव प्रसज्यत इत्यर्थः। द्रव्यं भावरूपेण परिणमत इति द्रव्यं परिणामि, भावः परिणाम इत्यनयोः परिणाम परिणामिभावसम्बन्ध,नाम वाचकम्, भावो वाच्य इत्यनयोर्वाच्य-वाचकभावसम्बन्ध इति भावेन सह भिन्नसम्बन्धेन सम्ब-

तु वाच्यवाचकभावेनेत्यस्ति विशेष इति चेत्, तर्हि स्थापनाया अपि तुल्यपरिणामतया भावसम्बद्धत्वात् किं न नाम्नो विशेष इति पर्यालोचनीयम्। स्यादेतत्-षण्णां प्रदेशस्वीकर्तुर्नैगमात् पञ्चानां तत्स्वीकार इवात्रापि चतुर्निक्षेपस्वीकर्तुस्ततस्तत्रयस्वीकारेणैव सङ्ग्रहस्य विशेषो युक्त इति, मैवम्-देश प्रदेशवत् स्थापनाया उपचरितविभागाभावेन सङ्ग्रहविशेषादिति दिक् ॥२॥

ध्यमानत्वाद् द्रव्य नाम्नोर्भेद इत्याह-द्रव्यमिति। परिणामितया परिणामपरिणामिभावेन, परिणामिस्वरूपेण सत्तागते तु द्रव्ये तद् स्वरूपसम्बन्धेन, भावे निरूपकतयेति बोध्यम्। एवं सति स्थापनाऽपि तदुभयसम्बन्धाभ्यसम्बन्धेनैव भावसम्बद्धेति विशेषात् साऽप्यतिरिक्तेव स्वीकरणीयेत्याह-तर्हीति। तुल्यपरिणामतयेति-सद्भूतस्थापनाश्रितस्य यादृशो भावस्याकारविशेषः स्वगतस्तादृश सन्निवेशविशेष स्थापनाया अपीत्यनयोस्तुल्यपरिणामतेति अत्र 'तुल्यपरिमाणतया' इति पाठो युक्तः। परः शङ्कते-स्यादेतदिति। षण्णां धर्मास्तिकायादि पञ्चं तद्देशानाम्। पञ्चानां धर्मास्तिकायादिपञ्चानाम्। तत्स्वीकार इव सङ्ग्रहनये प्रदेशाभ्युपगम इव। अत्रापि निक्षेपविषयेऽपि। तत नैगमात्। त्रयेति-निक्षेपत्रयेत्यर्थः। सङ्ग्रहनय उपचारं नेच्छति देश प्रदेशयोर्देशमात्रविशेषत्वे सत्यपि भेदकल्पनोपचारत एवेति तदनभ्युपगमाद् युज्यते तत्र तस्य पञ्चानामेव तत्स्वीकारः, प्रकृते तु स्थापनानिक्षेपविभागो नोपचरित इति तस्य सङ्ग्रहनये स्वीकारसम्भवेनानुपचरितलक्षणविशेषस्य सङ्ग्रहेऽप्येतावताऽप्यनभ्युपगमेनेति समाधत्ते-मैवमिति ॥

॥ इति सङ्ग्रहनिरूपणम् ॥

*

"लोकव्यवहारोपयिकोऽध्यवसायविशेषो व्यवहारः" । "वच्चइ विणिच्छियत्थं, ववहारो सव्वदव्वेसु" [विशेषावश्यकनि० गा० २१८३] त्ति सूत्रम् । विनिश्चितार्थप्राप्तिश्चास्य सामान्यानभ्युपगमे सति विशेषाभ्युपगमात्, अत एव विशेषेणावह्रियते निराक्रियते सामान्यमनेनेति" निरुक्त्युपपत्तिः, जलाहरणाद्युपयोगिनो घटादिविशेषानेवायमङ्गीकरोति न तु सामान्यम्, अर्थ-

अथ व्यवहारनयं प्ररूपयति—

लोकेति-'व्यवहारः' इति लक्ष्यनिर्देशः, 'लोक०' इत्यादि लक्षणम् । उक्तलक्षणे सूत्रं प्रमाणयति-वच्च० त्ति-"व्रजति विनिश्चितार्थं व्यवहारः सर्वद्रव्येषु" इति संस्कृतम् । अनेन सूत्रेण विशेषाभ्युपगमस्य लोकव्यवहारोपयिकस्य कथं लाभ इत्यपेक्षायामाह-विनिश्चितार्थप्राप्तिश्चेति । अस्य व्यवहारस्य । विनिश्चितार्थप्राप्तिर्नाम-अयं धर्मास्तिकायो गत्युपग्रहकारी, स्थित्युपग्रहकारी अधर्मास्तिकाय इत्येवं विशेषेण व्यवहारोपयोगिना धर्मेण निश्चितो योऽर्थस्तस्य प्राप्तिः, व्यवहारेऽर्थप्राप्तेः प्राधान्यात्, तथा निवृत्त्युपेक्षे अपि उपलक्षणीये, व्यवहारस्य प्रवृत्ति-निवृत्त्युपेक्षालक्षणत्वादिति बोध्यम् । अत एव व्यवहारस्य सामान्यानभ्युपगमपुरस्सरविशेषाभ्युपगमप्रयणत्वादेव । अनेन अध्यवसायविशेषेण । विशेषाभ्युपगन्तृत्व-सामान्यानभ्युपगन्तृत्वे व्यवहारस्य व्यवस्थापयति-जलाहरणाद्युपयोगिन इति । अय व्यवहारः । कथं सामान्यं नाभ्युपगच्छतीत्यपेक्षायामाह-अर्थक्रियाऽहेतोरिति । तस्य सामान्यस्य । अर्थक्रियाकारित्वमेव वस्तुनः सत्त्वम्, नहि घटत्व-द्रव्यत्व-सत्त्वादिभिः सामान्यैर्जलाद्याहरणादिलक्षणाऽर्थक्रिया क्रियते किन्तु घटादिविशेषस्वरूपव्यक्त्यैवेति विशेषस्यैवार्थक्रियाकारित्व-लक्षणसत्त्वादभ्युपगमो न तत्सत्त्वलक्षणविरहिणः सामान्यस्येति भावः । नन्वनुभूयमानस्यापलापोऽनुभवविरोधान्न युक्तः, अन्यथा विशेषस्यापलापे शून्यतैव जगतः स्यात्, अनुभूयते च घटोऽयं

क्रियाऽहेतोस्तस्य शशशृङ्गप्रायत्वात्। ननु घटोऽयं द्रव्यमिदमित्यादौ घटत्व-द्रव्यत्वादिकं कथमपह्नोतुं शक्यमिति चेत्, न कथञ्चित्, अन्यापोहरूपं तत्, न त्वतिरिक्तमित्येव परमुच्यते, अखण्डाभावनिवेशाच्च नान्योऽन्याश्रयः। यदि

---

द्रव्यमिदमित्याद्यनुगतप्रतीत्या सामान्यमिति शङ्कते—नन्विति। सामान्यं नापलप्यते किन्तु अन्यव्यावृत्तिलक्षणापोहरूपं तद्, न विधिरूपमिति विधिरूपेण तदनभ्युपगम एव सामान्यानभ्युपगम इति समाधत्ते न कथञ्चिदिति—'अपह्नोतुं शक्यम्' इत्यनुषज्यते। तर्हि सामान्यानभ्युपगमे सति विशेषाभ्युपगमो व्यवहारस्येति भवता इत्यत आह—अन्यापोहरूपमिति। तत् सामान्यम्, घटत्वं घटान्यव्यावृत्तिरूपं द्रव्यत्वं द्रव्यान्यव्यावृत्तिरूपमित्येवं सामान्यमात्रमन्यापोहरूपमित्यर्थः। इत्थं सामान्याभ्युपगमे सामान्यानभ्युपगमो हीयेतेत्यत आह—न त्वतिरिक्तमिति। परं किन्तु, अतिरिक्तमपोहव्यतिरिक्तम्, विधिरूपं सामान्यं नास्तीत्येतावन्मात्रमेव सामान्यानभ्युपगम इत्यर्थः। ननु पटादेर्घटाद्यन्यत्वग्रहे तदन्यत्वं घटादेर्ग्राह्यम्, पटादेर्घटाद्यन्यत्वग्रहश्च घटादौ पटाद्यन्यत्वग्रहे सत्येवेत्यन्योऽन्याश्रयोऽपोहरूपसामान्याभ्युपगमे, विधिरूपसामान्याभ्युपगमे च घटत्वपटत्वादीनां स्वरूपत एव भानसम्भवान्नोक्तदोषावकाश इत्यत आह—अखण्डाभावनिवेशाच्चेति। घटान्यान्यत्वं यदि घटत्वावच्छिन्नप्रतियोगिताकभेदावच्छिन्नप्रतियोगिताकभेदत्वरूपेण घटत्वस्वरूपमुपेयेत तदा तत्रापि घटत्वप्रतियोगितावच्छेदकतया सन्निविष्टमुक्तभेदत्वरूपेणैवाभ्युपगतमित्यनवस्था स्याद्, यावद्घटादिव्यक्तिभिन्ना यावन्तः पटादयस्तावद्भिन्नत्वं घटत्वमिति यदि स्वीक्रियेत तदा तद्ग्रहो यावद्व्यक्तीनां प्रातिस्विकरूपेणाग्रहे न भवेत्, घटादिव्यक्तीनां यावत्ता पटादिभिन्नत्वेन पटादिव्यक्तीनां घटादिभिन्नत्वेन ग्रहाभ्युपगमेऽन्योऽन्याश्रयः स्यात्, परं नैतदभ्युपेयते किन्तु घटान्यापोहोऽखण्डभेदस्वरूपः, तस्य स्वरूपत एव भानमित्याह—अखण्डाभावनिवेशाच्चेति। नन्वेवमपि तदेवाखण्डाभावस्वरूपं सामान्यमभ्युपगतमेवेति सामान्यानभ्युपगमो

चैवमप्यभावसामान्याभ्युपगमापत्तिः, तदा तु सर्वत्र शब्दानुगमादेवानुगतव्यवहारः कारणत्वव्याप्त्यादौ परेणापीत्थमेवाभ्युपगमादित्यादिकं प्रपञ्चितमन्यत्र। "लौकिकसम उपचारप्रायो विस्तृतार्थो व्यवहारः" इति तत्त्वार्थभाष्यम् [अ० १, सू० ३५.]। विशेषप्रतिपादनपरमेतत्, यथाहि–लोको निश्चयतः पञ्चवर्णेऽपि भ्रमरे कृष्णवर्णत्वमेवाङ्गीकरोति तथाऽयमपीति लौकिकसमः। न च कृष्णो भ्रमर इत्यत्र विद्यमानेतरवर्णप्रतिषेधाद् भ्रान्तत्वम्, अनु-

---

व्याहन्यत एवेति चेन्माऽस्त्वनुगताभावस्वरूपमपि तत्, वासनामयविकल्पवशात्नुगतस्य सामान्यस्याप्येकत्वान्ध्योजनात् यथानुगतव्यवहारः, दृश्यते च कारणत्वव्याप्त्यादावनुगतसामान्याभावेऽप्यनुगतव्यवहारः शब्दानुगमादेव, नहि घटकारणेषु दण्डचक्रादिषु सामान्यमेकम्, तथापि कार्याव्यवहितप्राक्क्षणावच्छेदेन कार्यसमानाधिकरणात्यन्ताभावप्रतियोगितानवच्छेदकधर्मवत्त्वादिपरिकल्पितैकशब्दानुगममात्रेण कारणं कारणमित्यनुगतव्यवहारः, साध्यसाधनतत्सम्बन्धादिभेदेन व्याप्तीनां भेदेऽपि भवत्येवेदं व्याप्यमिदं व्याप्यमित्यनुगतव्यवहारः शब्दानुगमादेवेति परेऽपीत्थमेवाभ्युपगच्छन्तीत्याह–नादे चैवमपीति। तत्त्वार्थभाष्योक्तं व्यवहारनयलक्षणमुपदर्शयति–लौकिकसम इति। अनेनापि भाष्येण व्यवहारस्य विशेषाभ्युपगन्तृत्वमेवावेद्यत इत्याह–विशेषेति। एतद् निरुक्तभाष्यम्। तत्र लौकिकसमत्वं व्यवहारे उपपादयति–यथाहीति। निश्चयत–निश्चयनयतः। तथाऽयमपि व्यवहारनयोऽपि भ्रमरे कृष्णवर्णत्वमेवाभ्युपगच्छति। ननु पञ्चवर्णे भ्रमरे कृष्णेतरवर्णसद्भावेऽपि केवलकृष्णवर्णत्वावबोधस्यायथार्थावगाहित्वाद् व्यवहारनयाभ्युपगतस्य तस्य भ्रान्तत्वं स्यादित्याशङ्क्य प्रतिक्षिपति–न चेति। पञ्चवर्णे कृष्णवर्णस्यापि सद्भावात् तद्वति तदवगाहित्वेन नास्य भ्रान्तत्वम्, यद्यनेन नास्ति कृष्णेतरवर्ण इत्येवमन्यवर्णप्रतिषेधात्मभासनं क्रियेत तदा कृष्णेतरवर्णवति तद्-

द्भूतत्वेनेतराविवक्षा, तद्व्युदासेऽतात्पर्यात् उद्भूतवर्णविवक्षाया एवाभिलापादिव्यवहारहेतुत्वात्। कृष्णादिपदस्योद्भूतकृष्णादिपरत्वाद् वाऽतात्पर्यज्ञं प्रत्येतस्याप्रामाण्येऽपि तात्पर्यज्ञं प्रति प्रामाण्यात्, लोकव्यवहारानुकूलत्वात्। नापि निश्चयतः, अवधारणाक्षमत्वादित्यसत्यमेव।

भावावगाहित्वेन भ्रान्तत्वं भवेत्, न चैवम्, केवलमनुद्भूतत्वेनाविवक्षैवान्यवर्णस्येति निषेधहेतुमुपदर्शयति-अनुद्भूतत्वेनेति। इतरविवक्षेति-कृष्णेतरवर्णाविवक्षा। तद्व्युदासे भ्रमरे कृष्णेतरवर्णप्रतिक्षेपे। अतात्पर्यात् कृष्णो भ्रमर इति व्यवहारवाक्यस्य तात्पर्याभावात्। तर्हि कृष्णो भ्रमर इति प्रयोगे किं बीजमित्यपेक्षायामाह-उद्भूतवर्णविवक्षाया इति-भ्रमरे कृष्णवर्ण उद्भूत इति तद्विवक्षाया अभिलापादिव्यवहारहेतुभूताया सद्भावात् कृष्णो भ्रमर इति वाक्यं प्रयुज्यते, कृष्णेतरवर्णस्यानुद्भूतस्य विवक्षाऽपि यदि भवेत् तथापि सा नाभिलापादिव्यवहारहेतुरिति रक्तो भ्रमर इत्यादि वाक्यं न प्रयुज्यत इत्यर्थः। अथवा कृष्णो भ्रमर इति वाक्ये कृष्णपदमुद्भूतकृष्णबोधेच्छयोच्चरितमिति उद्भूतकृष्णो भ्रमर इति ततो बोधः, उद्भूतश्च भ्रमरे कृष्णवर्ण एवेति तदितरस्योद्भूतवर्णस्य व्यवच्छेदेऽपि नोक्तबोधस्य भ्रान्तत्वमिति तात्पर्यज्ञं प्रति प्रमात्मकबोधजनकत्वादुक्तवाक्यस्य प्रामाण्यमेव, कृष्णपदमुद्भूतकृष्णपरमिति यो नावगच्छति तस्योक्तवाक्यात् कृष्णवर्णबोधे सामान्यतः कृष्णेतरवर्णस्यैव व्यवच्छेदावभासनमिति तस्य भ्रान्तत्वे तं प्रति तद्वाक्यस्याप्रामाण्येऽपि न क्षतिरित्याह-कृष्णादिपदस्येति। एतस्य कृष्णो भ्रमर इति वाक्यस्य। एवं च सर्वं वाक्यं सावधारणमिति नियमतः कृष्णो भ्रमर इति वाक्यस्य कृष्ण एव भ्रमर इत्येवरूपत्वेऽपि न क्षतिः। निश्चयनयतस्तु कृष्णो भ्रमर इति वाक्यस्य न प्रामाण्यं तन्मते पञ्चवर्णत्वे भ्रमरस्य सावधारणोक्तवाक्यात् कृष्णेतरवर्णव्यवच्छेदावगतौ भ्रान्तत्वस्यैव भानेन तज्जनकस्योक्तवाक्यस्याप्रामाण्य[illegible]न भावादित्याह-नापि निश्चयत इति-यथाऽतात्पर्यज्ञं प्रति मोक्त-

ननु 'कृष्णो भ्रमरः' इति वाक्यवत् 'पञ्चवर्णो भ्रमरः' इति वाक्यमपि कथं न व्यवहारनयानुरोधि, तस्यापि लोकव्यवहारानुकूलत्वात्, आगमबोधितार्थेऽपि व्युत्पन्नलोकस्य व्यवहारदर्शनात्, लोकबाधितार्थबोधकवाक्यस्याव्यवहारकत्वे चात्माऽरूपवानित्यादिवाक्यस्याप्यव्यवहारकत्वापातात् तस्याप्यात्मगौरत्वादिबोधकलोकप्रमाणबाधितार्थबोधकत्वात्, अभ्रान्तलोकबाधितार्थबोधकत्वं

---

वाक्यस्य प्रामाण्यं तथा निश्चयनयतोऽपि न प्रामाण्यमित्यर्थः। तत्र हेतुमाह–अवधारणाक्षमत्वादिति–वाक्येऽवधारणमावश्यकम्, प्रकृतेऽवधारणे क्रियमाणे कृष्णेतरवर्णव्यावृत्तिः स्याद्, एवं च सति प्रामाण्यमेव न भवेदित्यवधारणाक्षमत्वादुक्तवाक्यप्रामाण्यस्यातोऽवधारणगर्भमप्रमाणमेव तदित्याह–असत्यमेवेति। प्रकृते–नन्विति। तस्यापि पञ्चवर्णो भ्रमर इति वाक्यस्यापि। यद्यप्यपामरं पञ्चवर्णो भ्रमर इति लोके व्यवहारो न भवति तथापि श्रुताद्यावर्तनप्रवीणस्य व्युत्पन्नलोकस्य तथाव्यवहारस्य दर्शनात्, प्रयुञ्जते च शास्त्रज्ञा पञ्चवर्णो भ्रमर इत्याह–आगमबोधितार्थेऽपीति। लोके कृष्ण एव भ्रमरो ज्ञायत इति तेन बाधितं पञ्चवर्णत्वमित्यतस्तद् वाक्यमव्यवहारकं तदा लोके आत्मा गौरोऽहं कृष्णोऽहमित्यादिप्रतीत्या रूपवत्त्वमेवात्मनोऽवधृतमिति तद्बाधितमरूपवत्त्वमित्यात्माऽरूपवानिति वाक्यस्याप्यव्यवहारकत्वं स्यादित्याह–लोकबाधितार्थेति। तस्यापि आत्माऽरूपवानित्यादिवाक्यस्यापि। यदि चात्माऽरूपवानिति वाक्यं नाभ्रान्तलोकबाधितार्थकम्, ये ह्यात्मनि गौरत्वादिकं जानते ते शरीरेण सहात्मनोऽभेदाध्यवसायिनो भ्रान्ता एव, तर्हि पञ्चवर्णे भ्रमरे कृष्णमेव वर्णमध्यवस्यन्तो लोका भ्रान्ता एवेति पञ्चवर्णो भ्रमर इति वाक्यस्यापि नाभ्रान्तलोकबाधितार्थबोधकत्वमिति आत्माऽरूपवानिति वाक्यस्य यथा व्यावहारिकत्वं तथा पञ्चवर्णो भ्रमर इति वाक्यस्यापि तत्त्वं स्यादेवेत्याह–अभ्रान्तेति–अत्र 'अभ्रान्तलोकाबाधितार्थबोधकत्वम्' इति पाठो युक्तः, यथाश्रुतपाठप्रामाण्ये [illegible] तुल्यताऽ-

वोभयत्र तुल्यम्। प्रत्यक्षनियतैव व्यवहारविषयता, न त्वागमादिनियतेति तु व्यवहारदुर्नयस्य चार्वाकदर्शनप्रवर्तकस्य मतम्, न तु व्यवहारनयस्य जैनदर्शनस्पर्शिन इति चेत्, सत्यम्-यद्यपि क्वचिददृष्टार्थे नैश्चयिकविषयतासंवलितैव व्यावहारिकविषयता स्वीक्रियते, तथापि लोकप्रसिद्धार्थानुवादस्थले क्वचिदेव सेति कृष्णो भ्रमर इति

व्यवहारेण बोध्या। ननु यत्रैव प्रत्यक्षविषयत्वं तत्रैव व्यवहारविषयत्वमिति भ्रमरे पञ्चवर्णस्य प्रत्यक्षविषयत्वाभावाद् व्यवहारविषयत्वमपि न भवतीति पञ्चवर्णो भ्रमर इति वाक्यं न व्यवहारनयानुरोधीत्यत आह-प्रत्यक्षनियतैवेति-प्रत्यक्षविषयताव्याप्यैवेत्यर्थः, प्रत्यक्षस्य विषयतासम्बन्धेन व्यापकत्वे तु प्रत्यक्षव्याप्यैवेत्यर्थोऽपि युक्त एवेति बोध्यम्। आगमादिनियता इत्यस्यागमादिप्रमाणजन्यबोधविषयत्वनियतेत्यर्थः। चार्वाकेति-चार्वाकदर्शने हि प्रत्यक्षमेवैकं प्रमाणमिति प्रत्यक्षप्रमाणाविषयो वस्तु नास्त्येवेत्यतो न तस्य व्यवहारविषयत्वमिति। 'जैनदर्शनस्पर्शिन' इत्यनेन जैनदर्शने आगमादेरपि प्रमाणत्वादागमाद्यवगतार्थस्य लोके व्यवह्रियमाणत्वात् भ्रमरे पञ्चवर्णस्याप्यागमाद्यवगतत्वेन जैनमान्यव्यवहारविषयत्वं स्यादेवेति दर्शितम्। समाधत्ते-सत्यमिति। यस्य कस्यचिदागमाद्यवगतार्थस्य व्यवह्रियमाणता प्रत्यक्षाविषयस्यापि भवति तत्र नैश्चयिकविषयतासंवलिता व्यवहारविषयता भवतु नाम नैतावता सर्वस्यापि ताव्यवहारिकप्रत्यक्षाविषयस्यापि व्यावहारिकविषयतेति कृष्णे पञ्चवर्णस्य व्यवहारेऽननुध्रियमाणत्वेन कृष्णो भ्रमर इति वाक्यस्यैव व्यवहारपथावतीर्णत्वेन तज्जन्यबोधे भ्रमरनिष्ठविशेष्यतानिरूपितकृष्णत्वनिष्ठप्रकारत्वाख्यविषयतैव व्यावहारिकी, न तु भ्रमरनिष्ठविशेष्यतानिरूपितपञ्चवर्णत्वनिष्ठप्रकारत्वाख्यविषयताऽपि तथा, अनुभयस्यान्यथा

वाक्ये स्वजन्यबोधे भ्रमरविषयतानिरूपितपञ्चवर्णत्वा- त्यविषयतायां व्यवहारिकत्वाभावाच्च तथात्वमिति दिक्। कुण्डिका स्रवति, पन्था गच्छतीत्यादौ बाहुल्येन गौण- प्रयोगादुपचारप्रायः, विशेषप्रधानत्वाच्च विस्तृतार्थ इति। अयमपि सकलनिक्षेपाभ्युपगमपर एव। स्थापनां नेच्छ-

कर्तुमशक्यत्वादित्याह–यद्यपीति। स्वीकृत इति-न पक्षपातमात्रात् किन्त्वनुभवानुरोधादिति। लोकप्रसिद्धेति–यद्यपरेऽप्यर्थे लोकप्रसिद्धि- र्बलीयसी संवृत्ता, तदनुसारि च तदनुवादस्वरूपं वाक्यं तथेत्यर्थः॥ सा नैश्चयिकविषयतासंवलिता व्यावहारिकी विषयता। स्वजन्यबोधे कृष्णो भ्रमर इति वाक्यजन्यबोधे। पञ्चवर्णत्वप्रकारकविषयताया पञ्चवर्णत्व- निष्ठप्रकारत्वाख्यविषयतायाम्, विषयताया विषयस्वरूपत्वेऽपि विष- यतानामधेयत्वं न भवतीति न पञ्चवर्णत्वगतविषयतायां पञ्चवर्णत्वा- त्यन्तमिति बोध्यम्। न तथात्वं न नैश्चयिकविषयतासंवलितव्याव- हारिकविषयतात्वम्, एतावता व्यवहारनयस्य लौकिकसमतत्वमुप- पादितम्। अथ तस्योपचारप्रायत्वमुपपादयति–कुण्डिकेति–कुण्डिका- द्गतजलादेरेव तच्छिद्रादिद्वारा बहिर्निर्गमनलक्षणं स्रवणं न तु कुण्डिकायाः, तथाऽपि लोके कुण्डिका स्रवतीति व्यवहारप्रवृत्तिरिति जलगतनिर्गमनस्य कुण्डिकायामुपचारः, मार्गे पथिको गच्छति, मार्गस्तु स्थिरभूत एवावतिष्ठते, एवमपि पथिकगतगमनक्रियाया मार्गे उपचार इति। सामान्यापेक्षया विशेषाणामधिकसंख्यकत्वेन तद्ग्राहिणो व्यवहारस्य सामान्यग्राहिसंग्रहनयापेक्षया विस्तृतार्थत्वमित्याह– विशेषप्रधानत्वाच्चेति–अनेन गौणतया सामान्यमप्यभ्युपगच्छतीत्यतो न दुर्नयतेति सूचितम्। यथा च नैगम-सङ्ग्रहौ निक्षेपचतुष्टयमभ्युप- गच्छतस्तथा व्यवहारोऽपीत्याह–अयमपीति–व्यवहारोऽपीत्यर्थः, अपिना नैगम-सङ्ग्रहयोरभ्युच्चयः। व्यवहारः स्थापनां नेच्छतीति केषाञ्चि- न्मतं न रमणीयमित्युपदर्शयं दर्शयति–स्थापनामिति। अथ व्यवहारः। नेषा व्यवहारस्य स्थापनानिक्षेपानभ्युपगन्तृत्वमित्यभ्युपगच्छताम्।

स्थयमिति केचित्, तेषामाशयं न जानीमः, न हीन्द्रप्रतिमायां नेन्द्रव्यवहारो भवति, नवा भवन्नपि भ्रान्त एव, नवा नामादिप्रतिपक्षव्यवहारसाङ्कर्यमस्तीति, अर्धजरतीयमेतत्, यदुत-लोकव्यवहारानुरोधित्वं स्थापनाऽभ्युपगन्तृत्वं चेति ३ ॥

"प्रत्युत्पन्नग्राह्यध्यवसायविशेष ऋजुसूत्रः" ।

"पच्चुप्पण्णग्गाही, उज्जुसुओ णयविही मुणेयव्वो" [विशेषावश्यकनि० गा० २१८४] त्ति सूत्रम् । प्रत्युत्पन्न-

लोके इन्द्रप्रतिमायामपीन्द्रव्यवहारो भवत्येवेत्यत उक्तमतमनुमत्य बाधितमित्याह-नहीति-निषेधद्वयेन तत्र तद्व्यवहारस्य दृढत्वमावेदितम् । उक्तव्यवहारस्य भ्रान्तव्यवहारत्वेन विपर्यासाभकत्वमित्यपि नास्तीत्याह-नवेति । भवन्नपि इन्द्रप्रतिमायामिन्द्रव्यवहारो आयमानोऽपि, भ्रान्तत्वं तस्य तदा स्याद् यदि केनचित् प्रमाणेनास्य बाधावतारः स्यात्, नास्ति च स इति बाधितार्थविषयत्वाभावान्न भ्रान्तत्वमित्याशयः । यदि च स्थापनायां नामादिनिक्षेपव्यवहारो भवेत् तदा तत्साङ्कर्यात्सङ्कीर्णस्थापनानिक्षेपत्वं न भवेदपि, न चैवमपीत्याह-नवेति । नामादीति-आदिपदाद् भाव द्रव्ययोरुपग्रहः । नामादिनिक्षेपरूपो यः स्थापनानिक्षेपप्रतिपक्षः स्थापनानिक्षेपविरोधी तद्व्यवहारो यदि इन्द्रप्रतिमायां भवेत् तदा तत्साङ्कर्यं स्थापनानिक्षेपव्यवहारस्य, तन्नास्तीत्यर्थः । 'एतद्' इति यदुक्तं तदेव दर्शयति-यदुतेति ॥

इति व्यवहारनयनिरूपणम् ॥

अथ ऋजुसूत्रं निरूपयति—

प्रत्युत्पन्नेति-'प्रत्युत्पन्नग्राही अध्यवसायविशेषः' इति लक्षणम्, 'ऋजुसूत्र' इति लक्ष्यम् । उक्तलक्षण-लक्ष्ययोरुपरि सूत्रं प्रमाणयति-पच्चुप्पन्नेति-"प्रत्युत्पन्नग्राही ऋजुसूत्रो नयविधिर्ज्ञातव्यः" इति संस्कृतम्, यद्यपि कालत्रयाभ्युपगन्ता नैगमादिस्तत्रापि वर्तमानलक्षणप्रत्युत्पन्नग्राहित्वं समस्तीत्यतिप्रसङ्ग एवोक्तलक्षणमत आह-प्रत्युत्पन्नग्राहित्वं चेति ।

ग्राहित्वं च भावत्वेऽतीतानागतसम्बन्धाभावव्याप्यत्वोपगन्तृत्वम्, नातोऽतिप्रसङ्गः। वर्तमानक्षणसम्बन्धवदतीतानागतक्षणसम्बन्धोऽपि कथं न भावानामिति चेत्, विरोधात्। अतीतत्वानतीतत्वयोरेव विरोधो न त्वतीतत्वानागतत्वयोरिति चेत्, न—अनागतत्वेनातीतत्वाक्षेपात्। अतीतानागताकारज्ञानदर्शनादविरोधादिति चेत्,

---

भावत्व इति—यत्र यत्र भावत्वं तत्रातीतानागतकालसम्बन्धाभाव इत्येवं यद् भावत्वस्यातीतानागतकालसम्बन्धाभावव्याप्यत्वं तदभ्युपगन्तृत्वमित्यर्थः। अतः—उक्तस्वरूपप्रत्युत्पन्नग्राहित्वस्याध्यवसायविशेषे निवेशात्। नातिप्रसङ्गः—नैगमादौ नातिव्याप्तिः। उक्तव्याप्तिमसहमानः पर आह—वर्तमानेति—तथा चातीतानागतसम्बन्धवत्यपि भावे भावत्वं वर्तत इति नोक्तव्याप्यत्वं भावत्वे इत्याशयः। यत्रातीतत्वं तत्रानागतत्वमिति विरोधादेव नैकस्यातीतानागतकालसम्बन्ध इत्युक्तव्याप्तिः स्यादेवेत्युत्तरयति—विरोधादिति। भावाभावयोरेव विरोध इत्यतीतत्वस्याऽनतीतत्वेनैव विरोधो न त्वनागतत्वेनेति शङ्कते—अतीतत्वेति। एवकारव्यवच्छेद्यमेवोपदर्शयति—न त्विति। यथा च भावस्य स्वाभावेन विरोधस्तथा स्वाभावव्याप्येनापि, अनागतत्वं चानतीतत्वलक्षणो योऽतीतत्वाभावस्तद्व्याप्य एव, अनागतत्वज्ञानेऽतीतत्वज्ञानादिति भवत्यनागतत्वस्यातीतत्वेन विरोध इति समाधत्ते—नेति। अनतीतत्वाक्षेपाद् अनतीतत्वज्ञानात्। एकमेव ज्ञानमतीताऽनागताकारद्वयशालि दृश्यत इति नातीतत्वाऽनागतत्वयोर्विरोधः, ज्ञानस्यातीताकारेणानागताकारेण चाभेदः, आकारे चातीतत्वाऽनागतत्वयोः सत्त्वे तदभिन्ने ज्ञानेऽपि तयोः सत्त्वमित्याशयेन शङ्कते—अतीतेति। तच्च ज्ञानं वासनाप्रभवं विषयीभूताऽतीताऽनागताभावेऽप्युपजायत इति तदाकारयोर्न वस्तुतोऽतीतत्वाऽनागतत्वे, ततस्तद्द्वारा न ज्ञानेऽपि ते, विषयजनितं च प्रत्यक्षं नाऽतीताऽनागताऽऽकारद्वयशालीति नाऽतीतत्वाऽनागतत्वसामानाधिकरण्यसिद्धिरित्या-

न–प्रत्यक्षे तथाकारानुपरागात् , प्रबुद्धवासनादोषजनित तथाविकल्पाच्च वस्त्वसिद्धेः। अनुभवाविशेषे विकल्पाविशेष इति चेत्, न–उपादानव्यक्तिविशेषेणोपादेयव्यक्तिविशेषादित्यन्यत्र विस्तरः।

"सतां साम्प्रतानामर्थानामभिधान परिज्ञानमृजुसूत्रः"

इत्येन प्रतिक्षिपति–नेति। तथाकारानुपरागात् अतीतानागताकारसम्बन्धाभावात्। अतीतानागताकारोल्लेखज्ञानादेव कुतो न तथाभूतवस्तुसिद्धिरि–त्यपेक्षयामाह–प्रबुद्धेति–प्रबुद्धवासनाजनितत्वविशेषणेन तथाविधज्ञानस्य भ्रान्तत्वमावेदितम्। तथाविकल्पाच्च अतीतानागतज्ञानलक्षणविकल्पात् पुनः। ननु प्रत्यक्षात्मकमपि पूर्वसमनन्तरज्ञानेन जन्यते विकल्पोऽपि तथेति प्रत्यक्षस्य प्रामाण्ये विकल्पस्यापि तत्त्वमिति ततोऽपि वस्तुसिद्धिः स्यादेवेति शङ्कते–अनुभवाविशेषे इति–"यत्रैव जनयेदेना तत्रैवास्य प्रमाणता" इति वचनात् प्रत्यक्षस्थलेऽपि विकल्पद्वारैव प्रत्यक्षस्य प्रामाण्यं प्रमाणीभूतविकल्पकारणस्य प्रत्यक्षस्य यथाऽनुभवत्वं तथोक्तविकल्पकारणप्रत्यक्षस्यापि तत्त्वमिति तदविशेषे यथैकस्य विकल्पस्य वस्तुसाधकत्वं तथाऽपरस्यापि, विकल्पत्वेन तयोरविशेष एवेत्यर्थः। वस्तुसिद्धौ द्वारीभूतस्य विकल्पस्योपादानीभूता या प्रत्यक्षव्यक्तिस्ततो विलक्षणीभूताऽकल्पोपादानीभूता प्रत्यक्षव्यक्तिः, यस्या प्रभूतवासनादोष सहकारीत्यत उपादेयविकल्पव्यक्त्योर्विशेषस्य सद्भावादिति समाधत्ते–नेति। ग्रन्थगौरवभयाद्विषयविचारोऽत्र प्रतन्यते, ग्रन्थान्तरे विचारितोऽयमर्थस्ततो विशेषजिज्ञासुभिरवसेय इत्याशयेनाह–इत्यन्यत्र विस्तर इति। तत्त्वार्थभाष्योक्तमृजुसूत्रलक्षणमुपदर्शयति–सतामिति–अर्थक्रियाकारित्वलक्षणसत्त्वशालिनामित्यर्थः। वर्तमानक्षणस्वरूपस्यैवार्थक्रियाकारित्वं नातीतानागतयोरित्याशयेनाह–साम्प्रतानामिति–वर्तमानानामित्यर्थः। अभिधान–परिज्ञानमित्यत्र समाहारद्वन्द्व, तेनार्थक्रियाकारिवर्तमानक्षणस्वरूपार्थस्याभिधानं ज्ञानं च ऋजुसूत्रमित्यर्थः। ऋजुसूत्रस्य व्यवहारनयादतिशायित्वमेव लक्षणमिति

इति [१. ३५] तत्त्वार्थभाष्यम्, व्यवहारातिशायित्वं लक्षणमभिप्रेत्य तदतिशयप्रतिपादनार्थमेतदुक्तम्। व्यवहारो हि सामान्यं व्यवहारानङ्गत्वान्न सहते, कथं तर्ह्यर्थमपि परकीयमतीतमनागतं चापि, अभिधानमपि तथाविधार्थवाचकम्, ज्ञानमपि च तथाविधार्थविषयमविचार्य सहेतेत्यस्याभिमानः। न चायं वृथाभिमानः, स्वदेश-काल-

तदतिशयप्रतिपत्त्यर्थमेवोक्तभाष्यमित्याह–व्यवहारातिशायित्वमिति। ऋजुसूत्रस्य व्यवहारतोऽतिशयप्रतिपादनाय व्यवहारमन्तर्भाव्यस्यायुक्तताभावेवयमाह–व्यवहार इति–अस्य 'न सहते' इत्यनेनान्वयः। हि यतः, सामान्येन जलाहरणादिक्रिया न भवतीत्यतो व्यवहाराऽनङ्गत्वात् सामान्यं नाभ्युपगच्छति व्यवहार इत्यर्थः। यथा सामान्यं नार्थक्रियाकारि तथा परकीयार्थोऽपि न स्वार्थक्रियाकारीति तदपि नाभ्युपगच्छेदेव, तथाऽतीतमनागतं चार्थमर्थक्रियाकारित्वाभावान्नाभ्युपगच्छेदेव, अभिधानस्यापि तथाभूतार्थवाचकस्य सदर्थप्रतिपादकत्वाभावादनभ्युपगम एव समुचितः, ज्ञानस्यापि तथाभूतार्थावगाहिनः सदर्थविषयकत्वाभावादनुपगम एव ज्यायान्, तथा चार्थं परकीयमतीतानागतं च तदभिधानं तज्ज्ञानं चाभ्युपगच्छन् व्यवहारो व्यवहाराऽनङ्गभूतार्थाभ्युपगन्तृत्वेन न परीक्षकपरीक्षाक्षमइत्याह–कथं तर्हीति–'अर्थमपि परकीयम्' इत्यस्य 'सहेत' इत्यनेनान्वयः, एवम् 'अतीतमनागतं च' इत्यादेरपि 'सहेत' इत्यनेनान्वयः, सर्वस्मिन्नपि प्रत्येकं कथं तर्हि इत्यस्यान्वयः। 'अविचार्य' इत्युक्त्या विचारे क्रियमाणे तेषामसहनमेव युक्तमित्यावेदितम्। तथा च तेषामुपगमो विचारत एव व्यवहारस्येति न सूक्ष्मविचारपाटवं तस्येति ध्वनितम्। इति पर्वस्वरूपः। अस्य ऋजुसूत्रस्य। अभिमान – अभिनिवेशः। अस्याभिमानस्य निष्प्रयोजनत्वे कदाग्रहरूपतैवेत्यपि नास्तीत्याह–न चेति। स्वदेशेति–स्वदेश एव वस्तुनोऽर्थक्रियाकारित्वलक्षणसत्त्वेन परकीयार्थस्य स्वदेशसत्त्वाभावेनासत्त्वमेव, एवं वर्त-

योरेव सत्ताविश्रामात्, यथाकथञ्चित् सम्बन्धस्य सत्ताव्यवहाराङ्गत्वेऽतिप्रसङ्गात्। न च देशकालयोः सत्त्वं विहायान्यदतिरिक्तं सत्त्वमस्ति यद्योगिता प्रकृते स्यात्, असत्ताबोधोऽपि चास्ति, तत्र सत्ताननुवेधात्, अन्यथा खरशृङ्गादीनामसत्ता न सिद्ध्येत्। उद्देश्यासिद्ध्या विधेयाऽसत्तेति चेत्, कथं तर्हि खरशृङ्गमसदिति व्यवहार। खरशृङ्गस्य भावप्रतियोगि शृङ्गमिति तदर्थ इति चेत्,

मानलक्षणस्वकाल एव निरुक्तसत्त्वेनातीताऽनागतयोस्तथाविधसत्ताभावेनासत्त्वमेव, तथार्थाभिधान तथार्थज्ञानयोरपि न सद्‌र्थाभिधायकस्य सदर्थविषयकत्वे इति कुसुमस्योक्ताभिमान सदभिमानयेति। परदेशे परकाले च यौक्त सम्बन्धमादाय तस्य सत्ताव्यवहाराङ्गत्वे घटोऽपि कश्चित्कृतसम्बन्ध परिकल्प्य शशशृङ्गाद्विप्यवहारोऽप्यापत्तेरित्याह–यथाकथञ्चिदिति। स्वदेशे स्वकाले च यन्निरुक्त सत्त्व तदन्तरेण नैयायिकादिपरिकल्पित सत्त्व नास्त्येव यदाश्रयणेन परकीयार्थादि सत्त्वस्य व्यवहाराङ्गता स्यादित्याह–न चेति। न केवल परकीयार्थादेरुक्तसत्त्वाभाव किन्तूक्तसत्त्वासम्बन्धादसत्त्वावबोधोऽपीत्याह–असत्तेति। तत्र परकीयार्थादौ। अन्यथा निरुक्तसत्त्वासम्बन्धादसत्त्वबोधाऽनभ्युपगमे। ननु खरशृङ्गादयोऽसन्त इत्याकारकाऽसत्त्वबोधे खरशृङ्गादीनामुद्देश्यत्वाद्वाक्यविषयत्वम् असत्त्वस्य च विधेयत्वात्स्वविषयत्वम्, खरशृङ्गादीनुद्दिश्याऽसत्त्व विधीयत इति तत्र खरशृङ्गादिरूपोद्देश्याऽसिद्ध्या तत्राऽसत्त्वविधानाऽसम्भवादिति शङ्कते–उद्देश्याऽसिद्ध्येति। यदि खरशृङ्गादीनुद्दिश्याऽसत्त्वविधान न सम्भवति तर्हि खरशृङ्गमसदिति व्यवहारस्य का गतिरिति पृच्छति–कथं तर्हीति। तत्रोत्तरमाह–खरेति। तथा खरशृङ्गमसदित्यस्यार्थ। खरशृङ्गमसदिति वाक्यात् खरशृङ्गविशेष्यकाऽसत्त्वप्रकारकबोध एव स्वरसत उपजायते, न तु खरशृङ्गस्यभावप्रतियोगित्वप्रकारक शृङ्गविशेष्यकबोध इति खरशृङ्गस्यभावप्रतियोगिशृङ्गमिति तदर्थः स्वारसिको

न- एतस्यार्थस्यास्वारसिकत्वात् । तथाप्ययोग्यतानिश्चये कथं स्वारसिको यथाश्रुतार्थबोध इति चेत्, रूपकादिस्थल इवाहार्ययोग्यतानिश्चयात्, विकल्पात्मकज्ञाने तस्याप्रतिबन्धकत्वाद् वा। तथा चोक्तं श्रीहर्षेणापि[खण्डनखण्डे]-

"अत्यन्तासत्यपि ह्यर्थे ज्ञानं शब्दः करोति हि ।
अबाधात् तु प्रमामत्र स्वतः प्रामाण्यनिश्चलाम्" ॥१॥ इति ।

न सम्भवतीति समाधत्ते-नेति । एतस्य खरशृङ्गस्याभावप्रतियोगि शृङ्गमित्येवंरूपस्य । शङ्कते-तथापीति-निरुक्तार्थस्याऽस्वारसिकत्वेऽपीत्यर्थः । खरशृङ्गस्याऽसत्त्वात् तत्र कस्यापि धर्मस्याभावाच्च तत्राऽसत्त्वमेवेति तदभावनिश्चयलक्षणाऽयोग्यतानिश्चयस्य प्रतिबन्धकस्य सद्भावात् खरशृङ्गमसदिति वाक्यात् स्वारसिकः खरशृङ्गविशेष्यकाऽसत्त्वप्रकारकबोधो न भवितुमर्हतीत्यतः खरशृङ्गस्याभावप्रतियोगित्वप्रकारक-शृङ्गविशेष्यकबोध एवाऽगत्योपेय इत्याशयः । मुखं चन्द्र इत्यादौ मुखं न चन्द्र इत्यादियथार्थनिश्चयेऽप्याहार्ययोग्यतानिश्चयतः शाब्दबोध उपजायते तथा प्रकृतेऽपि स्वारसिको यथाश्रुतार्थबोध आहार्ययोग्यतानिश्चयतः स्यादेवेति समाधत्ते-रूपकादिस्थल इवेति । अथवा खरशृङ्गमसदिति वाक्याद् विकल्पाऽऽत्मकबोध एवोपजायते, तत्र च नायोग्यतानिश्चयः प्रतिबन्धक इति तस्मिन् सत्यपि स स्यादेवेत्याह-विकल्पाऽऽत्मकज्ञान इति । तस्य अयोग्यतानिश्चयस्य । अयोग्येऽप्यर्थे शब्दाज्ज्ञानमुपजायत इत्यत्र खण्डनखण्डकर्तुः श्रीहर्षमिश्रस्य सम्मतिमुपदर्शयति-तथा चोक्तमिति । अत्यन्तेति-शब्दोऽत्यन्तासत्यप्यर्थे ज्ञानं करोति । अत्र अर्थे । अबाधात् अन्वयिनोऽर्थस्याभावनिश्चयाभावात्, तु पुनः स्वतः प्रामाण्यनिश्चलां प्रमां करोतीत्यर्थः । एतदनन्तरमयमपि श्लोकः खण्डनखण्डे-

"असंसर्गाग्रहस्यापि मन्ता संशीत्यबाधिते ।
अत्यन्तासदसंसर्गाग्रहं संसर्गलम्भकम्" ॥१॥ इति ।

अथासतोऽभावाश्रयत्वमभावप्रतियोगित्वं च भावधर्मरूपं न सम्भवतीति न तन्निषेधो युक्तः। शशशृङ्गमस्ति न वेति पृच्छतो धर्मिवचनव्याघातेनैव निग्रहात् तत्रान्यतराभिधानेनोभयनिषेधेन तूष्णीम्भावेन वा परा-

बाधितार्थस्थले प्रमाऽनभ्युपगन्ता प्रभाकरः पदार्थद्वयसंसर्गबोधस्य प्रमाऽऽत्मकस्यासम्भवात् तयोरसंसर्गस्याग्रह एवेत्यभ्युपगन्ताऽपि यत्राबाधितार्थस्थले पदार्थयोरत्यन्तमसन् योऽसंसर्गस्तस्याग्रहं पदार्थद्वयसंसर्गबोधसमनुगतं वदतीति तदर्थः। ननु—

"व्याधरत्वाभाववत्सैव भावकी हि विशेष्यता।
अभावविरहात्मत्वं वस्तुनः प्रतियोगिता" ॥१॥

इति वचनादत्यन्ताऽसतः खरविषाणादेर्भावधर्मस्य प्रतियोगित्वाधारत्वादेर्न सम्भव इत्यभावप्रतियोगित्वलक्षणमसत्त्वं न सम्भवतीति न यथाश्रुतार्थसम्भव इत्याशङ्कते-अथेति। असत्त्वमभावात्मकधर्मविशेष एवेत्यभिप्रेत्योक्तम्-अभावाश्रयत्वमिति। किञ्चिद्भिन्नाऽत्यन्ताऽभावप्रतियोगित्वमसत्त्वमित्यभिप्रेत्योक्तम्-अभावप्रतियोगित्वञ्चेति। भावधर्मरूपमिति-भाव एव वर्तते, खरशृङ्गादिस्तु तुच्छत्वात् भावरूप एवेति न तत्र तस्य सम्भव इत्यभिसन्धिः। तन्निषेध खरशृङ्गमसदित्येवंरूपेण परशृङ्गनिषेधः। ननु यदि शशशृङ्गादेरसतो निषेधो न सम्भवति तर्हि तस्य शशशृङ्गमस्तीत्येवंरूपेण विधानमपि न सम्भवति विधेरपि भावधर्मत्वात्, एवं च शशशृङ्गमस्ति नवेति पृष्टो वदस्तीति वा नास्तीति वा ब्रुवन्नुभयथाऽप्ययुक्तभाषित्वान्निगृहीतः स्यात्, यदि किञ्चिद् ब्रूयात् तदापि प्रश्नोत्तराऽज्ञानादवचनेनैव निगृहीतः स्यादित्यत आह-शशशृङ्गमस्तीति-विधौ निषेधे च शशशृङ्गमित्येन धर्मिवचनम्, तत्रार्थशून्यमित्यतः कोऽपि धर्मी नोपात्त इति कस्यास्तित्वं नास्तित्वं वा पृच्छाविषयः स्यादिति धर्मिवचनव्याघातात् प्रष्टैव निगृहीत इति निगृहीतस्य कथायां पुनरुत्थानाऽसम्भवात् तत्र प्रतिवादी किमप्युत्तरं कथयतु, तूष्णीं वा भवतु नाममात्रेऽपि तस्य पराजयाभावादिति समुदितार्थः। तत्र धर्मिवचनव्याघातेन निगृहीते प्रष्टरि। अन्यतराभिधानेन अस्तित्व नास्तित्वयो

जयाभावादिति चेत्, न—यथा परेषां विशिष्टस्यातिरिक्तस्यासत्त्वेऽपि तत्राभावाश्रयत्वस्याभावप्रतियोगित्वस्य वा व्यवहारस्तथास्माकमपि सदुपरागेणासत्यपि विशिष्टे वैज्ञानिकसम्बन्धविशेषरूपतद्व्यवहारोपपत्तेः। शशशृ-

---

रेकतराभिधानेन। ननु शशशृङ्गस्यास्तित्वाभावात् तन्नास्तित्वाभिधानेऽसदुत्तरदानात् कथं न पराजय इति चेत्, शशशृङ्गं धर्मीकृत्य पृच्छतोऽपि शशशृङ्गमनुमतमेव, तद् यद्रूपेणानुमतं तद्रूपेणास्तित्वमप्यस्य अभिलपितुमर्हतीत्येतावतोत्तरसम्भवात्। अथवा प्रष्टा स्वयं निगृहीतो न किमपि तद्विषयिण्यां कथायां वक्तुमर्हतीत्यसदुत्तरमेतदित्यपि न स्याद्वैयर्थ्येनायताऽप्युत्तरयितुः पराजयाभावात्। उभयनिषेधेनेति—न शशशृङ्गमस्ति नापि तत्रास्तीत्यस्तो विधि-निषेधासम्भवादित्येवमुभयनिषेधेनेत्यर्थः। एवमपि प्रतिवादिनो न पराजय, धर्मिवचनन्यायातेनैव पराजयः स्यात्, स चोभयोरपि समान एवेति। तूष्णींभावेन चेति—उत्तरार्हे वस्तुनि उत्तराप्रतिपत्तिरप्रतिभेति उक्तप्रश्नश्च नोत्तरार्ह इति नाप्रतिभाख्यनिग्रहस्थानमिति तूष्णींभावेनापि प्रतिवादिनः पराजयाभावादित्यर्थः। समाधत्ते—नेति। परेषां नैयायिकादीनाम्, गुणकर्मान्यत्वविशिष्टसत्ता सत्तातोऽतिरिक्ता नास्ति, विशिष्टनिरूपिताधिकरणत्वस्य शुद्धनिरूपिताधिकरणतातोऽतिरिक्तत्वादेव विशेष्यवति गुणादौ विशिष्टवत्त्वप्रतीतेः प्रामाण्यासम्भवात्, एवमपि गुणकर्मान्यत्वविशिष्टसत्त्वे सामान्यं नास्तीत्यादिप्रतीत्या सामान्याभावाश्रयत्वमुपपत्स्यते, एवं गुणे गुणकर्मान्यत्वविशिष्टसत्त्वं नास्तीत्यादिप्रतीत्याऽभावप्रतियोगित्वमपि तस्य स्वीक्रियते, तदनुरोधी व्यवहारोऽपि भवति। अस्माकमपि ऋजुसूत्रनयकल्पमुपपादयतां जैनानामपि। सदुपरागेण सतोः शशशृङ्गयोः संसर्गेण। असत्यपि असद्रूपेऽपि। विशिष्टे शशशृङ्गे। वैज्ञानिकेति—शशशृङ्गं नास्तीति विकल्पात्मकज्ञानप्रयुक्तेत्यर्थः, सम्बन्धविशेषः विषयत्वादिलक्षणः, तद्रूपो यो व्यवहार ऋजुसूत्रनयेऽसतोऽपि विकल्पविषयत्वमुपेयत इति तस्योपपत्तेः सम्भवात्। तथा च खरशृङ्गमसत् शशशृङ्गमसदित्येवं खरशृङ्गादिनिषेधो युक्त एवेत्यर्थः। उक्तप्रश्नप्रतिविधानमपि सम्भवत्येवेत्याह—

ङ्गमस्ति नवेति जिज्ञासुप्रश्ने शशशृङ्गं नास्तीत्येवाभिधातुं युक्तत्वात्, आनुपूर्वीभेदादुद्देश्यसिद्धेः। इत्थमेव पीतः शङ्खो नास्तीत्यादेरपि प्रामाण्योपपत्तेः। काल्पनिकस्याप्यर्थस्य परमतिबोधार्थतया कल्पिताहरणादिवद् व्यवहरतः प्रामाण्यात्। इत्थमेव नयार्थरुचिविशेषोपपादनाय तत्र तत्र नयस्थले दर्शनान्तरीयपक्षग्रहस्य तान्त्रिकैरिष्टत्वादिति दिक्। अस्यापि चत्वारो निक्षेपा अभिमताः। द्रव्यनिक्षेपं नेच्छत्ययमिति वादिसिद्धसेनमतानुसारिणः।

---

शशशृङ्गमस्तीति। यद्यपि शशशृङ्गं नास्तीत्येव प्रयुज्यते, तेन च शशशृङ्गस्याभावः प्रतीयते, यथा घटरूपं नास्तीत्यादौ घटरूपाभावः, तथाऽपि घटरूपं नास्तीत्याद्यवाक्यान्तरे घटरूपं निषिध्यते, प्रकृते तु नैवमिति तत्र विशिष्टाभावबोधनेऽपि प्रकृतानुपूर्वीविशेषाच्छशे शृङ्गाभावबोधस्य सम्भवेन यस्तु शशे शृङ्गाभावो बोधयितुमिष्टस्तदुद्देश्यः, तत्सिद्धिसम्भवात्, शाब्दबोधवैचित्र्यानुरोधेनानुपूर्वीलक्षणाऽऽकाङ्क्षावैचित्र्यस्योपपत्तावादित्याशयेनाह-आनुपूर्वीभेदादुद्देश्यसिद्धेरिति-उक्तं च चिन्तामणिकृता-"नहि शशशृङ्गं नास्तीत्यप्रतीतेः शशशृङ्गं नास्तीत्येव प्रतीतेस्तत्र च शशे शृङ्गाभाव एव विषयः" इति, अथवा शशशृङ्गं न नाम जगति इत्यवबोधनमेव जिज्ञासुं प्रत्युद्देश्यम्, तदवबोधनं च शशशृङ्गं नास्तीत्यानुपूर्वीकृते न सम्भवतीति तादृशानुपूर्वीभेदादुक्तोद्देश्यसिद्धेरित्यर्थः। पीतशङ्खस्याऽसत्त्वेऽपि तन्निषेधो भवति, तत्रापीयमेव गतिरित्याह-इत्थमेवेति। ननु शशशृङ्गस्य काल्पनिकत्वे तत्र नास्ति यद्यपि काल्पनिकमिति तदवबोधस्य कथं प्रामाण्यमित्यत आह-काल्पनिकस्यापीति। इत्थमेव उक्तप्रकारेणैव। अस्यापि ऋजुसूत्रनयस्यापि। वादिसिद्धसेनदिवाकरमते ऋजुसूत्रस्य न द्रव्यनिक्षेपाभ्युपगन्तृत्वमित्याह-द्रव्यनिक्षेपमिति। अयम्

तेषामुक्तसूत्रविरोधः। न चोक्त एवैतत्परिहार इत्येतन्मतपरिष्कार इति वाच्यम्, नामादिवदुपचरितद्रव्यनिक्षेपदर्शनपरत्वादुक्तसूत्रस्य तदनुपपत्तेः अधिकमन्यत्र ॥४॥

आदेशान्तरे "यथार्थाभिधानं शब्दः" [त० १,३५] इति त्रयाणामेकं लक्षणम्। भावमात्राभिधानप्रयोजकोऽध्यव-

ऋजुसूत्र । तथा चानिसिद्धसेनमतानुसारिणाम् । उक्तसूत्रविरोध — ऋजुसूत्रो यदि द्रव्य नाभ्युपगच्छेत् तदा 'उज्जुसुयस्स एगे अणुवउत्ते एगं दव्वावस्सयं पुहत्तं णेच्छइ' [पृ० ३३] ति सूत्र विरुध्येत इति ग्रन्थेनोक्तसूत्रविरोध । न च इत्यस्य वाच्यम् इत्यनेनान्वय । उक्त एवेति 'उक्तसूत्र त्वनुपयोगांशमादाय वर्तमानावश्यकपर्याये द्रव्योपचारात् समाधेयम् [पृ० ३४] इति ग्रन्थेनोक्त एवेत्यर्थ । एतत्परिहार उक्तसूत्रविरोधपरिहार । एतन्मतपरिष्कारे वादिसिद्धसेनमतोपपादने । उपचरितद्रव्यनिक्षेपप्रदर्शनपरत्वेन सूत्रविरोध परिहृत, स चायुक्त उक्तसूत्रे उपचरितार्थत्वाभावादित्याह नामादिवदिति । तदनुपपत्ते - उपचरितद्रव्यनिक्षेपप्रदर्शनपरत्वानुपपत्ते ॥

॥ इति ऋजुसूत्रनयनिरूपणम् ॥

अथ शब्दनयं निरूपयति—

आदेशान्तर इति शब्दपदेनैव साम्प्रत समभिरूढैवम्भूताख्य नयभेदत्रयोपसङ्ग्रहात् पक्षे यादेशान्तर वर, तथा पञ्च नैगम सङ्ग्रह व्यवहार ऋजुसूत्र शब्दभेदाविति मत इति यावत्। 'यथार्थाभिधानम् इति लक्षणम् शब्द इति लक्ष्यम्। त्रयाणा शब्द समभिरूढैवम्भूतानाम्। 'एक लक्षणम् इत्युक्त्यैकलक्षणाक्रान्त स्याद् एकत्वमिति पञ्च नया एतन्मत उपपद्यन्ते। यथार्थाभिधानत्व नैगमादिनयेऽतिप्रसक्तमत आह भावमात्रेति। नैगमादिनयश्च द्रव्याद्यभिधानप्रयोजकोऽपीति न तत्रातिप्रसङ्ग इत्याह-त्वेनेति।

सायविशेष इत्येतदर्थः, तेन नातिप्रसङ्गादिदोषोपनिपातः। तथापि "नामादिषु प्रसिद्धपूर्वाच्छब्दादर्थे प्रत्ययः साम्प्रतः" [त०१,३५] इति साम्प्रतलक्षणम्, प्रतिविशिष्टवर्तमानपर्यायापन्नेषु नामादिष्वपि गृहीतसङ्केतस्य शब्दस्य भावमात्रबोधकत्वपर्यवसायीति तदर्थः। तथात्वं च भावातिरिक्तविषयांश उक्तसङ्केतस्याप्रामाण्यग्राहकतया निर्वहति।

शब्दनयाऽवान्तरनयेषु साम्प्रतनयं निरूपयति-तत्रापीति-शब्दनयेऽपीत्यर्थः। 'नामादिषु प्रसिद्धपूर्वाच्छब्दादर्थे प्रत्ययः' इति लक्षणम्, 'साम्प्रतः' इति लक्ष्यम्। उक्तलक्षणवाक्यार्थमुपदर्शयति-प्रतिविशिष्टेति-परस्पर व्यावृत्तेत्यर्थः, नाम्नो यो वर्तमानपर्यायः स स्थापनादिवर्तमानपर्यायेभ्यो भिन्नः, एवं स्थापनादिवर्तमानपर्याया अपि नामादिवर्तमानपर्यायेभ्यो व्यावृत्ता इति। पर्यायनये वर्तमानपर्यायापन्ना एव नामादय इति ज्ञापनार्थमेव 'प्रतिविशिष्टवर्तमानपर्यायापन्नेषु' इत्युक्तम्। नामादिष्वपि नाम-स्थापना द्रव्य भावेष्वपि। पर्यायनयविशेषे ऋजुसूत्रनये नामादिचतुर्णामभ्युपगमाच्चतुर्ष्वपि पदसङ्केतग्रहणतश्चतुर्णामप्यवबोधकत्वं शब्दस्येत्यतस्ततो वैलक्षण्यमावेदयति गृहीतसङ्केतस्येत्यादि-ततो भावमात्रे गृहीतसङ्केतस्य शब्दस्य भावमात्रावबोधकत्वपर्यवसायी योऽध्यवसायविशेषः स साम्प्रतनय इति। तदर्थः नामादिषु प्रसिद्धपूर्वाच्छब्दादर्थप्रत्यय इति वाक्यार्थः, अर्थात् 'प्रसिद्धपूर्वात्' इत्यस्य गृहीतसङ्केतिकादित्यर्थः। तथात्वं च गृहीतसङ्केतिकस्य शब्दस्य भावमात्रबोधकत्वं च। यद्यपि शब्दस्य सामान्यतो नामादिषु चतुर्ष्वपि सङ्केतस्तथापि भावमात्रबोधकत्वमेवेत्यतो भावातिरिक्तविषयांशे सङ्केतोऽयथार्थ इति भावमात्रबोधकत्वतो ज्ञायते। भावमात्रबोधकत्वाभावेऽन्यत्रापि यथार्थत्वमेवोक्तसङ्केतस्य स्यादित्याह-भावातिरिक्तेति। साम्प्रतनयः कश्चिल्लिङ्गभेदेनाऽर्थभेदग्राहकः, कश्चित् सङ्ख्याभेदेन कश्चित् पुरुषभेदेनार्थभेदाद्विग्राहक इत्येवं बहुविधः, तत्र शब्दस्य भावमात्रबोधकत्वपर्यवसायी योऽध्यवसायविशेषो न भवेत् तत्राव्याप्तिरुक्तलक्षणस्य मा भाम स्यादित्येतदर्थं जातिघटितलक्षणमाह-

तन्नामीयाध्यवसायत्वं च लक्षणमिति न क्वचिदनीदृश-स्थलेऽव्याप्तिः, समभिरूढाद्यतिव्याप्तिश्च अध्यवसाये च तत्तदन्यत्वविशेषणदानान्निराकरणीया। सम्प्रदायेऽपि "विशेषिततरऋजुसूत्राभिमतार्थग्राही अध्यवसायविशेष इति शब्दः" इत्यापादितसंज्ञान्तरस्यास्य लक्षणम्। "इच्छइ विसेसियतरं पच्चुप्पण्णं णओ सद्दो" त्ति ॥ [२१८४] सूत्रम्। अत्रापि तरप्रत्ययमहिम्ना विशेषिततमार्थोपवर्ति-

तन्नामीयेति–निरुक्ताध्यवसायवृत्तिनयत्वव्याप्यजातिमदध्यवसायत्वं साम्प्रतनयस्य लक्षणमित्यर्थः। समभिरूढादिनयोऽपि भाष्यमात्रमेयाभ्युपगच्छतीति तत्रातिव्याप्तिरेवमपि स्यादित्यत आह–समभिरूढात्यतिव्याप्तिश्चेति–आदिपदादेवम्भूतनयपरिग्रहः। तत्तदन्यत्वेति–यस्य यस्य समभिरूढाध्यवसायविशेषस्यैवम्भूताध्यवसायविशेषस्य वा शब्दगतभाष्यमात्रावबोधकत्वपर्यवसायित्वं तत्तद्भिन्नत्वस्याध्यवसायविशेषणतयोपादानान्नातिव्याप्तिरित्यर्थः। सम्प्रदायमतेन साम्प्रतनयस्य लक्षणमुपदर्शयति–सम्प्रदायेऽपीति–जिनभद्रक्षमाश्रमणप्रभृतिमते सम्प्रदाय, तत्र द्रव्यार्थिकस्य नैगम-सङ्ग्रह-व्यवहार-ऋजुसूत्राश्चत्वारो भेदाः, पर्यायार्थिकस्य शब्द-समभिरूढैवम्भूतास्त्रयो भेदाः, तन्मतेऽपीत्यर्थः। साम्प्रतनयः शब्द इति सामान्यनाम्नैवास्मिन् मतेऽभिधीयत इत्यापादितं संज्ञान्तरं यस्य स आपादितसंज्ञान्तरस्तस्येत्यर्थः। अस्य साम्प्रतनयस्य, न तु शब्द इति सामान्योक्तिमात्रेण त्रयाणामपि शब्दनयानामेतल्लक्षणमिति भ्रमितव्यमित्याशयः। उक्तलक्षणे सूत्रं प्रमाणयति–इच्छइ० इति–"इच्छति विशेषिततरं प्रत्युत्पन्नं नयः शब्द." इति संस्कृतम्। प्रत्युत्पन्नमिति ऋजुसूत्रविषयोपदर्शनेन ऋजुसूत्राभिमतार्थग्राहित्वं लभ्यते। अस्य लक्षणस्य समभिरूढैवम्भूतयोरतिव्याप्तिर्नेति दर्शयति–अत्रापीति–एतल्लक्षणेऽपीत्यर्थः। अपिना पूर्वोक्तलक्षणे तत्तदन्यत्वविशेषणदानान्नातिव्याप्तिरित्यस्योपग्रहः। तरप्रत्ययमहिम्ना–'विशेषिततर' इत्यत्र तरप्रत्ययोपादानसामर्थ्येन। विशेषिततमेति–समभिरूढनयो हि ऋजुसूत्राभिमतं विशेषिततमं गृह्णाति।

विषयग्रहणाच्च समभिरूढायतिव्याप्तिरिति स्मर्तव्यम्। ऋजुसूत्राद् विशेषः पुनरस्येत्थं भावनीयः-यदुत, संस्थानादिविशेषात्मा भावघट एव परमार्थः सन्, तदितरेषां तत्तुल्यपरिणत्यभावेनाघटत्वात्। घटव्यवहारादन्यत्रापि घटत्वसिद्धिरिति चेत्, न- शब्दाभिलापरूपव्यवहारस्य सङ्केतविशेषप्रतिसंधाननियन्त्रितार्थमात्रवाचकतास्वभावनियम्यमतया विषयतथात्वेऽतन्त्रत्वात्,

ततोऽपि विशेषिततममेवम्भूतनयो गृह्णाति, साम्प्रतस्तु विशेषिततरं गृह्णातीति विशेषिततरग्राहित्वाच्च समभिरूढैवम्भूतयोरतिव्याप्तिरित्यर्थः। ऋजुसूत्रात् समभिरूढस्य कथं विशेषिततरग्राहित्वमित्यपेक्षायामाह-ऋजुसूत्रादिति। अस्य साम्प्रतनयस्य। इत्थं 'यदुत' इत्यादिनाऽनन्तरमेव वक्ष्यमाणप्रकारेण। तदितरेषां भावघटभिन्नानां नामस्थापनाद्रव्यघटानाम्। तत्तुल्येति-भावघटपरिणतिसदृशेत्यर्थः। भावघटपरिणतिर्जलाहरणाद्यर्थक्रियाकारित्वस्वरूपा, न तादृशी परिणतिर्नामघटादीनामिति तुल्यपरिणत्यभावेन नामघटादीनां घटत्वाभावादित्यर्थः। यथा भावघटे घटव्यवहारस्तथा नामघटादावपीति 'नामघटादयो घटा घटत्वेन व्यवह्रियमाणत्वाद् भावघटवद्' इत्यनुमानान्नामघटादीनां घटत्वसिद्धिरिति शङ्कते-घटव्यवहारादिति। अन्यत्रापि नामघटादावपि। घटत्वेन व्यवह्रियमाणत्वं नास्त्येव नामघटादावित्यसिद्धस्तादृशो हेतुः घटपदेनाभिधीयमानत्वलक्षणो घटव्यवहारस्तु यत्र यत्र घटपदसङ्केतः क्रियते तत्र तत्र घटत्वाभावेऽपि घटपदसङ्केतविषयत्वस्याभाव्यादेव जायत इत्यनैकान्तिक इति समाधत्ते-नेति। विषयतथात्वे स्वविषयस्य व्यवह्रियमाणस्य घटत्वे। अतन्त्रत्वाद् अनिमित्तत्वात्। जलाहरणाद्यर्थक्रियार्थिनां घटानयनादिगोचरप्रवृत्त्यादिलक्षणव्यवहारविषयत्वं [illegible] घटत्वनियतमपि नामघटादावसिद्धमेवेति न ततोऽपि घटत्वसिद्धिरित्याह-प्रवृत्त्येति। घटः

प्रवृत्त्यादिरूपव्यवहारस्य चासिद्धेः। घटशब्दार्थत्वाविशेषे भावघटे घटत्वं नापरत्रेत्यत्र किं नियामकमिति चेत्, अर्थक्रियैवेति गृहाण। अत एवात्रानुपचरितं घटपदार्थत्वम्, अन्यत्र तूपचरितमिति गीयते विशेषः। अथवा ऋजुसूत्रस्य प्रत्युत्पन्नो विशेषितः कुम्भ एवाभिमतः, अस्य तु मत ऊर्ध्वग्रीवत्वादिस्वपर्यायैः सद्भावेनार्पितः कुम्भः कुम्भ इति भण्यते। इदंत्वकुम्भत्वाद्यवच्छेदेन स्वशिष्यनिष्ठस्वपर्यायावच्छिन्नत्वसत्ताबोधप्रयोजककुम्भ-

पृच्छति-घटशब्दार्थत्वाविशेष इति। नापरत्र न नामघटादौ घटत्वम्। उत्तरयति-अर्थक्रियैवेति-जलाहरणाद्यर्थक्रिया भावघटेनैव जन्यते, न तु नामघटादिनेति तादृशार्थक्रियाकारित्वाद् भावघटस्य घटत्वं तादृशार्थक्रियाकारित्वाभावाच्च नामघटादीनां घटत्वाभाव इत्येवं घटत्वाऽघटत्वयोर्नियामकं जानीहीत्यर्थः। अत एव अर्थक्रियाकारित्वादेव। अत्र भावघटे। अन्यत्र तु नामघटादौ पुनः। इति एवंस्वरूपः। विशेष-ऋजुसूत्रात् साम्प्रतनये विशेषः। गीयते सिद्धान्ते पूर्वाचार्यैरभिधीयते। एतत्पक्षे ऋजुसूत्राद् विशेष एव साम्प्रतनये उपपादितः, न तु तद्विषये विशेषितत्वम्, तच्च तत्रोपपादितं भवेद् यदि ऋजुसूत्रविषये विशेषितत्वम्, ततो वैशिष्ट्यात् साम्प्रतनयविषये विशेषिततरत्वमित्यत प्रकारान्तरमाह-अथवेति-ऋजुसूत्रविषये कुम्भे प्रत्युत्पन्नत्वमेव व्यवहारनयविषयात् कुम्भाद् विशेष इति विशेषितत्वम्, भाष्यानुरोधि च प्रत्युत्पन्नोऽविशेषित इति वाक्यमेव युक्तम्, तत्र चोक्तदिशा विशेषे सत्यपि साम्प्रतनयापेक्षयाऽविशेषितत्वमिति बोध्यम्। अस्य तु मते साम्प्रतनयमते पुनः। इदंत्वेति-'स्वशिष्य०' इत्यत्र स्वपदं कुम्भपरम्, 'स्वपर्याय०' इत्यत्र स्वपदं कुम्भादिसत्त्वपरम्, 'इदन्त्व-कुम्भत्वाद्यवच्छेदेन' इत्यस्य 'तत्त्वसत्ताबोधे' अन्वयः, तथैव 'स्वशिष्यनिष्ठ०' इत्यस्यान्वयः, तथा च स्वपर्यायावच्छिन्ना या तत्तस्य कुम्भादेः सत्ता तस्या इदन्त्व कुम्भ-

वाक्येच्छारूपगुर्वर्पणयाऽयमूर्ध्वग्रीवत्वादिना कुम्भ एव कुम्भः, ऊर्ध्वग्रीवत्वादिना कुम्भ एवेत्यादिवाक्यप्रयोगात्। इत्थमेवोद्देश्यसावधारणप्रतीतेर्वादान्तरोत्थापितविपरीताभिनिवेशनिरासस्य च सिद्धेः ॥ १ [ प्रथमो भङ्गः ] ॥ इदमेव भङ्गान्तरेऽप्यर्पणप्रयोजनं बोध्यम्।

पटादिगतैस्त्वक्त्राणादिभिः परपर्यायैरसद्भावेनार्पितोऽकुम्भो भण्यते, कुम्भे कुम्भत्वानवच्छेदकधर्मावि-

---

च्छिन्नत्वावच्छेदेन च, स्वशिष्यनिष्ठो बोधस्तत्प्रयोजकं यत् प्रकृतवाक्यम्-'अयमूर्ध्वग्रीवात्वादिना 'कुम्भ एव कुम्भ' इत्यादिवाक्यं तस्य या यत्नगता विवक्षारूपेच्छा तद्रूपा गुरुगता याऽर्पणा तयेत्यर्थः, अस्य 'वाक्यप्रयोगाद्' इत्यनेनान्वयः। इत्थमेव अमुना प्रकारेण वाक्यप्रयोगादेव। उद्देश्येति-उद्देश्या शिष्यगततयाऽभीष्टा या सावधारणप्रतीतिस्तस्याः सिद्धेः, तथा वादान्तरेण मतान्तरेणोत्थापितो जनितो यो विपरीत ऊर्ध्वग्रीवत्वाद्यन्यधर्मेण नामकुम्भादीनामपि कुम्भत्वाद्यभ्युपगमलक्षणोऽभिनिवेशः कदाग्रहस्तन्निरासस्य च सिद्धेरित्यर्थः। एतावतैतन्मते स्यादस्त्येव कुम्भः।

इति प्रथमभङ्गस्योपपादनम्।

अनया दिशैव द्वितीयभङ्गादिसमर्थनमप्यवसेयमित्याह-इदमेवेति-उद्देश्यसावधारणप्रतीति वादान्तरोत्थापितविपरीताभिनिवेशनिरासद्वयलक्षणमेवेत्यर्थः।

अथ तत्र द्वितीयभङ्गं समर्थयति—

पटादिगतैरिति। ऊर्ध्वग्रीवत्वादिकमेव कुम्भत्वसत्तावच्छेदकं न तु पटादिगतं त्वक्त्राणत्वादिकं तदवच्छेदकमिति प्रतियोग्यनवच्छेदकस्य तदभावावच्छेदकत्वमिति नियमेन त्वक्त्राणत्वादिकं भवति कुम्भत्वसत्त्वाभावरूपाकुम्भत्वसत्त्वावच्छेदकमिति त्वक्त्राणत्वाद्यवच्छिन्नाकुम्भत्वसत्त्वतो द्वितीयभङ्गोपपत्तिरित्याशयेनाह-कुम्भ-इति। ननु प्रमेयत्वादिकमपि कुम्भत्वानवच्छेदकत्वादकुम्भत्वावच्छे-

च्छिन्नाकुम्भत्वसत्त्वात् । नन्वेवं कुम्भत्वानवच्छेदकप्रमेयत्वावच्छेदेनाप्यकुम्भत्वापत्तिः, नानाधर्मसमुदायरूपकुम्भत्वे प्रमेयत्वस्याप्यवच्छेदकत्वात् ॥ २ [द्वितीयो भङ्गः] ॥

तथा सर्वोऽपि घटः स्वपरोभयपर्यायैः सद्भावासद्भावाभ्यामर्पितोऽवक्तव्यो भण्यते, स्वपरपर्यायसत्त्वासत्त्वाभ्यामेकेन केनापि शब्देन सर्वस्यापि तस्य युगपद्क्रमशाक्यत्वात् । अथैकपदवाच्यत्वं घटस्य स्वपर्यायावच्छिन्नत्वोपरागेणापि नास्तीति तदवच्छेदेनाप्यवाच्यतापत्तिः, वस्तुतः स्वपर्यायावच्छिन्नस्यैकपदवाच्यत्वेऽनावक्तव्यत्वाभावे वस्तुतः कथञ्चिदुभयपर्यायावच्छिन्न-

वकमिति प्रमेयत्वादिनाऽप्यसद्भावेनार्पितोऽकुम्भो भवेदित्याशङ्कते—नन्वेवमिति । प्रमेयत्व-वाच्यत्वादिकं सर्वमेव कुम्भे समस्तीति तत्सर्वस्वरूपमेव कुम्भत्वमिति तदवच्छेदकं प्रमेयत्वादिकमपि भवतीति न तस्याकुम्भत्वावच्छेदकत्वमिति तदवच्छेदेन सद्भावार्पणमेव नासद्भावार्पणमिति समाधत्ते—नानाधर्मेति ।

इति द्वितीयभङ्गसमर्थनम् ।

अथ तृतीयभङ्गसमर्थनायाह—

तथेति । कथं तथाऽर्प्यमाणस्यावक्तव्यत्वमित्यपेक्षायामाह—स्वपरपर्यायसत्त्वासत्त्वाभ्यामिति । तस्य घटस्य । 'अथ' इत्यारभ्य 'सम्प्रदाय' इत्यन्तमेका फक्किका तृतीयभङ्गासम्भवाऽऽशङ्कास्वरूपा बोध्या । यावन्तो घटस्य स्वपर्यायास्तावद्धर्मावच्छिन्नत्वेन घटस्य बोधकं नैकं किमपि पदं समस्तीति स्वपर्यायावच्छिन्नत्वेनापि घटस्यावक्तव्यत्वं स्यादित्याह—एकपदवाच्यत्वमिति । तदवच्छेदेनापि स्वपर्यायावच्छेदेनापि । ननु कुम्भादिपदेन घटोऽभिधीयते, स च घटः स्वपर्यायावच्छिन्न इति कृत्वा घटस्य स्वपर्यायावच्छिन्नस्यैकपदवाच्यत्वं समस्तीत्यत आह—वस्तुत इति—वस्तुस्थित्येत्यर्थः । एवं

स्याद्येकपदवाच्यत्वेन तथात्वापत्तेः, अन्यथा परपर्यायावच्छिन्नस्याप्यवक्तव्यत्वापत्तेः। विधेयांश एकपदजन्यस्वपरपर्यायोभयावच्छिन्नप्रकारकशाब्दबोधाविषयत्वमेवावक्तव्यत्वमिति न दोष इति चेत्, न—उभयपदजन्यस्याद्येकपदजन्यत्वाव्यभिचारात्। कुम्भ नन्पदाभ्याम कुम्भत्वबोधके द्वितीयभङ्गे परपर्यायावच्छेदेनाप्यवक्तव्य

स्वपर्यायावच्छिन्नत्वमुपलक्षणमेव घटस्य तथा च यथा स्वपर्यायावच्छिन्नत्वोपलक्षितस्य घटस्यैकशब्दवाच्यत्वेन वक्तव्यत्वमिति न तत्र तृतीयभङ्गप्रवृत्तिस्तथा स्वपरपर्यायोभयावच्छिन्नत्वोपलक्षितस्यापि तस्यैकपदवाच्यत्वेन वक्तव्यत्वस्यावाप्तेरवक्तव्यत्वाभावेन स्वपरोभयपर्यायैः सद्भावाऽसद्भावाभ्यामर्पणे तृतीयभङ्गप्रवृत्तिर्न स्यादेवेत्यर्थः। अन्यथा उभयपर्यायावच्छिन्नत्वोपरागेणैकपदवाच्यत्वेन वक्तव्यत्वाभ्युपगमे। परेति परपर्यायावच्छिन्नत्वोपरागेणाप्येकपदवाच्यत्वादवक्तव्यत्वस्य स्यादित्यर्थः। उक्तशङ्काया प्रतिविधानमाशङ्कते-विधेयांश इति-स्पष्टमभिदम्, तेन विधेयांशविशेष्यत्वेन तद्रूपं स्वाभेदेनेति तेनैवैन केनचित् पदेन स्वपरपर्यायावच्छिन्नेन येनापि धर्मेण कुम्भादेर्बोधो न जायत इत्यवक्तव्यत्वस्य घटादेर्निषेधतीत्यर्थः। स्वपर्यायेणार्पित सन् कुम्भ परपर्यायेणार्पितोऽसन् कुम्भ इत्येव स्वपरपर्यायाभ्यामर्पणे सदसदितिपदद्वयेन स्वपरपर्यायावच्छिन्नप्रकारको बोधो जायते तस्याप्येकपदजन्यत्व समस्त्येवेत्येकपदजन्यस्वपरपर्यायोभयावच्छिन्नप्रकारकशाब्दबोधविषयत्वमेव न तु निरुक्तशाब्दबोधाविषयत्वमिति तद्रूपमवक्तव्यत्व न स्यादेवेति प्रदर्शयिता प्रतिक्षिपति नेति। यदि च एकपदजन्यत्वमित्यस्यैकपदमात्रजन्यत्वमित्यभिमत तदा द्वितीयभङ्गेऽपि नैकपदमात्रेण विधेयांशे शाब्दबोध इति तत्राप्यवक्तव्यत्वोल्लेख स्यादित्याह-कुम्भ ननपदाभ्यामिति। यथा चन्द्र सूर्ययोरन्यतरेण सङ्केतितेन पुष्पदन्तपदेन बोधस्तथासत्त्वासत्त्वयोरुभयोरप्यन्यतरेण सङ्केतितेन केनचित् पदेन बोध स्यादेवेत्येकपदमात्रजन्यस्य परपर्यायोभयावच्छिन्नप्रकारकशाब्दबोधविषयत्वमेव न तु निरुक्तशाब्दबोधाविषयत्वमिति तल्लक्षणावक्तव्यत्वस्य बाधादपि न

स्योल्लेखापत्तेः। प्रकृतेऽप्येकेन तदुभयादिसाङ्केतिकपदेन बोधसम्भवाद् बाधाच्च। अथ 'स्वपर्यायोभयावच्छिन्नैकविधेयकशाब्दबोधाविषयत्वमेवावक्तव्यत्वम्', द्वितीयभङ्गे च कुम्भ-नञ्पदाभ्यामपि तात्पर्यवशादेकविधेयकबोधस्यैवोद्देश्यत्वान्नातिप्रसङ्गः, उभयादिपदाच्च बुद्धिस्थप्रकारकोभयविधेयकबोधस्यैवोद्देशाच्च बाध इति चेत्, न- अप्र-

---

तृतीयभङ्गप्रवृत्तिस्तस्य इत्याह-प्रकृतेऽपीति। तदुभयेति-सत्त्वाऽसत्त्वोभयेत्यर्थः। पुनराशङ्कायां शङ्कितप्रतिविधानगतदोषापादनाय प्रतिविधानमाशङ्कते-अथेति-प्रथमभङ्गे स्वपर्यायावच्छिन्नसत्त्वनिष्ठैकविधेयताकशाब्दबोध, द्वितीयभङ्गे परपर्यायावच्छिन्नासत्त्वनिष्ठैकविधेयताकशाब्दबोधो न तु स्वपरपर्यायोभयावच्छिन्नैकविधेयताकशाब्दबोध इति तादृशशाब्दबोधाविषयत्वलक्षणमवक्तव्यत्वं कुम्भेऽस्तीति तत्प्रतिपादकस्तृतीयभङ्ग इत्यर्थः। द्वितीयभङ्गेऽवक्तव्यत्वोल्लेखापत्तिं वारयति-द्वितीयभङ्गे चेति। एकविधेयकेति नास्तित्वात्मकैकविधेयकेत्यर्थः, तृतीयभङ्गे त्वस्तित्व-नास्तित्वोभयविधेयकबोध उद्देश्यः, तस्याभावाद् द्वितीयभङ्गे नावक्तव्यत्वोल्लेख इत्यर्थः। अस्तित्व-नास्तित्वयोः सङ्केतितादृशोभयादिपदादस्तित्वनिष्ठविधेयताकत्वे सति नास्तित्वनिष्ठविधेयताको बोधो जायते न तु विधेयताद्वयी न त्वेका विधेयतेति तादृशशाब्दबोधविषयत्वेऽप्येकविधेयताकशाब्दबोधाविषयत्वमस्त्येवेति न तस्य बाध इत्याह-उभयादिपदाच्चेति। 'उभयविधेयकबोधस्यैव' इत्येवकारेण स्वपरपर्यायोभयावच्छिन्नैकविधेयताकशाब्दबोधस्य व्यवच्छेदः। स्वपरपर्यायावच्छिन्नः कश्चिदेको धर्मो नास्त्येवेति तन्निष्ठैकविधेयताकबोधाप्रसिद्ध्या तद्विषयत्वाप्रसिद्धौ तदभावरूपस्याप्रसिद्धेस्तल्लक्षणावक्तव्यत्वाभावान्न तस्य तृतीयभङ्गार्थत्वसम्भव इति दोषप्रतिविधानं युक्तमित्याह न-अप्रसिद्धेरिति। ननु निरुक्तप्रसिद्ध्यनुपगमेऽपि विकल्पसिद्धत्वमुपगम्यत एव प्रमाणसिद्धस्यापीति निरुक्तावक्तव्यत्वस्य विकल्पसिद्धस्य तृतीयभङ्गार्थता स्यादित्यत आह—

स्मिंस्तु परपर्यायैरसद्भावविवक्षितोऽपरस्मिंस्तु स्वपरोभयपर्यायैः सद्भावासद्भावाभ्यामेकेन शब्देन वक्तुमिष्टः कुम्भोऽकुम्भोऽवक्तव्यश्च भण्यते, देशभेदेनैकत्र त्रयबोधनतात्पर्यैकवाक्येन तथाबोधादिति विशेषः ॥७ [सप्तमो भङ्गः] ॥

तथा च समापे भाष्यकारः—

"अहवा पच्चुप्पन्नो, रिउसुत्तस्साविसेसिओ चेव ।
कुंभो विसेसियपरो, सब्भावाईहिँ सद्दस्स ॥२२३१॥
सब्भावाऽसब्भावोभयप्पिओ सपरपज्जओभयओ।
कुंभा-कुंभा-ऽवत्तव्वोभयरूवाइभेओ सो" ॥२२३२॥
[ विशेषावश्यकभाष्यगाथे ] त्ति ।

अत्र कुम्भाकुम्भेत्यादि गाथार्धेन षड् भङ्गाः साक्षादुपात्ताः, सप्तमस्त्वादिशब्दात्, तथाहि कुम्भोऽकुम्भोऽवक्तव्यः, कुम्भश्चाकुम्भश्च कुम्भश्चावक्तव्यश्चाकुम्भश्चा-

इति विशेषः-पर्यवस्वरूपसप्तभङ्गीसम्भवः साम्प्रतनये ऋजुसूत्राद् विशेषः । साम्प्रतनये उक्तदिशा सप्तभङ्गोपगमे भाष्यसम्मतिमुपदर्शयति-तथा च समापे भाष्यकार इति । अहवेति-"अथवा प्रत्युत्पन्न ऋजुसूत्रस्याविशेषित एव । कुम्भो विशेषिततरः सद्भावादिभिः शब्दस्य ॥ सद्भावाऽसद्भावोभयार्पितः स्व-परपर्यायोभयतः । कुम्भाऽकुम्भाऽवक्तव्योभयरूपादिभेदः सः ॥" इति संस्कृतम् । अत्र निरुक्तभाष्यगाथायाम् । तथाहि—उक्तभाष्यतः सप्तभङ्गलाभ एवोपदर्श्यते । कुम्भ इति-अयं कुम्भ एवेति प्रथमभङ्गः । अकुम्भ इति-अयमकुम्भ एवेति द्वितीयभङ्गः । अवक्तव्य इति-अयमवक्तव्य एवेति तृतीयभङ्गः । इमे भङ्गा एकैकधर्मावबोधकाः । कुम्भश्चाकुम्भश्चेति-अयं कुम्भोऽकुम्भश्चेति चतुर्थभङ्गः । कुम्भश्चावक्तव्यश्चेति-अयं कुम्भश्चावक्तव्यश्चेति पञ्चमभङ्गः । अकुम्भश्चावक्तव्यश्चेति-अयमकुम्भश्चावक्तव्यश्चेति षष्ठभङ्गः ।

रन्ते, तथापि ऋजुसूत्रकृताभ्युपगमापेक्षया एतदन्यतर-भङ्गाधिक्याभ्युपगमाच्छब्दनयस्य विशेषिततरत्वमदुष्टमिति सम्प्रदायः। अथवा लिङ्ग-वचन-संख्यादिभेदेनार्थभेदाभ्युपगमादृजुसूत्रादस्य विशेषः। अयं खल्वेतस्याशयः—यदि ऋजुसूत्रेण—

"पलालं न दहत्यग्निर्भिद्यते न घटः क्वचित्।
नासंयतः प्रव्रजति भव्योऽसिद्धो न सिद्ध्यति" ॥१॥

इत्यादावभिनिवेशस्तर्हि विकाराविकाराद्यर्थकक्रिया-नामादिपदानां सामानाधिकरण्यानुपपत्त्या किं न तथा-कल्पने अभिनिविश्यतेति। अस्य चोपदर्शितनयो भाव-

---

स्यैवाभ्युपगम इत्यत्र विनिगमकं नोपदर्शितमेव सप्तभङ्ग्यभ्युपगमेऽपि मतान्तरे सप्तानामपि भङ्गानां विकलादेशत्वे नयेन समाश्रिते सम्पूर्णवस्त्वभ्युपगमप्रयोजकाभावात् स्यादवक्तव्यभङ्ग इत्यादिविचारणीयमेवेति प्रकारान्तरमृजुसूत्रात् साम्प्रतनयस्य विशेषं दर्शयति-अथवेति-तटस्तटी तटमित्यादौ लिङ्गभेदेऽप्यर्थभेदमृजुसूत्रनयो नाभ्युपगच्छति, साम्प्रतनयश्चाभ्युपगच्छतीति, एवं वचनादिभेदेऽपि योज्यम्। अस्य साम्प्रतनयस्य। साम्प्रतनयाभिप्रायं प्रकटयति-अयमिति-'यदि' इत्यादिनाऽनन्तरमेवाभिधीयमान इत्यर्थः। एतस्य साम्प्रतनयस्य। विकारेति-विकारार्थकं क्रियापदं नामादिपदं चाविकाराद्यर्थकमिति। सामानाधिकरण्यानुपपत्त्येति-विभिन्नप्रवृत्तिनिमित्तकपदानामेकार्थवृत्तित्वं सामानाधिकरण्यम्, तदनुपपत्त्येत्यर्थः। पदार्थयोस्तादात्म्यसम्बन्धेनाऽन्वये सत्येव तत्प्रतिपादकपदयोः सामानाधिकरण्यसम्भवः, विकाराऽविकाररूपार्थयोश्च न तादात्म्यमिति न तत्प्रतिपादकक्रिया-नामपदयोः सामानाधिकरण्यमिति। तथाकल्पने उक्तदिशाऽर्थभेदकल्पने। साम्प्रतनयश्च भावनिक्षेपमेवाभ्युपगच्छतीत्याह-अस्य चेति-साम्प्रतनयस्य पुनरित्यर्थः। उपदर्शितनयः नामघटादयो न जलाहरणाद्यर्थक्रियाकारिण इति न ते कुम्भशब्दवाच्याः, ऊर्ध्वग्रीवत्व-पृथुबुध्नोदरादित्ववानेव जलाहरणाद्यर्थक्रियाकारी घट इत्येवमुपदर्शितनयः।

॥ इति साम्प्रतनयनिरूपणम् ॥

निक्षेप एवाभिमतः ॥५॥

"असंक्रमगवेषणपरोऽध्यवसायविशेषः समभिरूढः" "वत्थूओ संकमणं होई अवत्थू णए समभिरूढे त्ति" [२१८५] सूत्रम्। 'सत्स्वर्थेष्वसङ्क्रमः समभिरूढ इति' तत्त्वार्थभाष्यम् [१,३५]। तस्य च यद्यपि न संज्ञाभेदेनार्थभेदाभ्युपगन्तृत्वम्, घटपटादिसंज्ञाभेदेन नैगमादिभिरप्यभ्युपगमात्, तथापि संज्ञाभेदनियतार्थभेदाभ्युपगन्तृत्वं धर्मभेदात्तत्। एवम्भूतान्यत्वविशेषणाच्च न तत्रातिव्याप्तिः। अयं त्वेतस्याभिमानः-यदुत, यदि शब्दो लिङ्गादिभेदेनार्थभेदं प्रतिपद्यते तर्हि संज्ञाभेदेनापि किमित्यर्थभेदं

---

अथ समभिरूढनयं प्ररूपयति—

असङ्क्रमेति-'असङ्क्रमगवेषणपरोऽध्यवसायविशेष' इति लक्षणम्, 'समभिरूढ' इति लक्ष्यम्। समभिरूढस्यासङ्क्रमणगवेषणापरत्वे सूत्रं प्रमाणयति वत्थूओ० इति-"वस्तुनः सङ्क्रमणं भवति अवस्तु नये समभिरूढे" इति संस्कृतम्। तत्त्वार्थभाष्यमपि तत्र प्रमाणतयोपदर्शयति-सत्स्वर्थेष्विति। एतावताऽतिव्याप्त्यादिदोषविकलं समभिरूढस्य लक्षणं किमभिमतमित्यपेक्षायामाह-तस्य चेति-समभिरूढस्य चेत्यर्थः। संज्ञाभेदेनेति-नैगमादिनये घटकुम्भादिसंज्ञाभेदेऽपि घटरूपार्थ एक एवेति न संज्ञाभेदनियतोऽर्थभेद इति न संज्ञाभेदनियतार्थभेदाभ्युपगन्तृत्वं नैगमादिनय इति न तत्रातिव्याप्तिः। तस्य समभिरूढनयत्वम्। व्युत्पत्तिनिमित्तमेव प्रवृत्तिनिमित्तं यथा समभिरूढनये तथैवम्भूतनयेऽपीति संज्ञाभेदनियतार्थभेदाभ्युपगन्तृत्वस्यैवम्भूतनये सत्त्वादतिव्याप्तिः, तद्वारणार्थमेवम्भूतनयभिन्नत्वे सति संज्ञाभेदनियतार्थभेदाभ्युपगन्तृत्वं तल्लक्षणं सत्यन्तविशेषणसंघटितमित्याह-एवम्भूतेति। तत्र एवम्भूतनये। समभिरूढनयमन्तव्यमुपदर्शयति-अयमिति-'यदुत' इत्यादिनाऽनन्तरमेवाभिधीयमान इत्यर्थः।

न स्वीकुरुते, अनुशासनबलाद् घट-कुटादिशब्दानामेकत्र सङ्केतग्रहादिति चेत्? ऋजुसूत्रेणेव तेनान्यथा ग्रहितोऽपि सङ्केतो विशेषपर्यालोचनया किमिति न परित्यज्यते?। अथ येन रूपेण यत्पदार्थबोधस्तेनैव रूपेण तत्पदशक्तिः, भवति च घटपदादिव कुटपदादपि घटत्वेनैवार्थबोध इति घट-कुटपदयोः पर्यायत्वमेव युक्तमिति चेत्, न-घटन-कुटनादिविभिन्नक्रियापुरस्कारेणैव घट-कुटादिपदेभ्योऽर्थबोधात्, तेषामर्थभेदनियमादसमानाधिकरणपदत्वापेक्षया लाघवाद् भिन्नपदत्वावच्छेदेनैव भिन्नार्थत्वकल्प-

भस्य समभिरूढस्य। स्वमतनयवादी आह—अनुशासनबलादिति। समभिरूढनयवादी आह—ऋजुसूत्रेणेवेति-व्यवहारानुसार्यनुशासनबलात् तत्तद्धर्मावच्छिन्ने गृहीतोऽपि शब्दस्य सङ्केतो यथा ऋजुसूत्रेण परित्यज्यते, तेनान्यापोहपुरस्कारेणव संकेताभ्युपगमात् तथेत्यर्थः। ननु शाब्दबोधानुरोधेनार्थे पदस्य सङ्केतः स्वीक्रियते, शाब्दबोधे च येन रूपेण यदर्थस्य यत्पदाद् भानं तेनैव रूपेण तदर्थे तत्पदस्य शक्तिरुपेयते, अन्यथा तेन रूपेण तदर्थस्य तत्पदादुपस्थितौ तेन रूपेण तदर्थस्य भानमेव शाब्दबोधे न भवेत्, भवति च यथा घटपदाद् घटत्वेन रूपेण घटरूपार्थस्य शाब्दबोधे भानम्, तथा कुटपदादपि तस्य तथैव भानमिति घट-कुटपदयोः पर्यायत्वमेवेति नानुशासनबलाद् गृहीतस्य सङ्केतस्य परित्यागः समुचित इति शङ्कते-अथेति। घटपदाद् घटनक्रियाविशिष्टत्वेन रूपेण घटस्य बोधः, कुटपदात् कुटनक्रियाविशिष्टतया तस्य बोधः, इत्येकरूपेण बोधाभावान्न तयोः पर्यायतेति समाधत्ते-नेति। सामान्यतः पर्यायपदमेव नास्तीति दर्शयति-तेषामिति-घट-कुटादिपदानामित्यर्थः। यद् असमानाधिकरणपदं तद् भिन्नार्थमिति नियमापेक्षया यद् भिन्नपदं तद्भिन्नार्थमिति नियमकल्पन एव लाघवमिति पर्यायपदमेव नास्तीत्यर्थः। ननु घटनादिक्रियामपुर-

मात् पर्यायपदाप्रसिद्धेः। व्युत्पत्त्यर्थबोधं विनाऽपि दृश्यते पदार्थबोध इति चेत्, न—अन्यत्र विपरीतव्युत्पन्नात् तदसिद्धेः। हन्त! एवं पारिभाषिकशब्दस्यानर्थकत्वमापन्नमिति चेत्, आपन्नमेव, किं हन्तेति पूत्कारेण?, तदुक्तम्—"तत्र परिभाषिकी नार्थतत्त्वं ब्रवीति" इति। अथार्थबोधकत्वमात्रे यदि पदत्वभावस्तदा यदृच्छाशब्दसङ्केतादपि

दृश्यतेऽपि, घटपदात् घटत्वेन बोधः कुटपदादपि तथा बोध इत्याशङ्कते—व्युत्पत्त्यर्थबोधं विनाऽपीति। सम्यग्व्युत्पन्नानां घटपदस्य घटनक्रियापुरस्कारेण कुटपदस्य कुटनक्रियापुरस्कारेण सङ्केतग्रहस्तथैव शाब्दबोधः, घटत्वेन घटे सङ्केतं गृहीतस्तु विपरीतव्युत्पन्नस्य घटत्वेन घटशाब्दबोधो भवतु नाम, न ततोऽर्थव्यवस्थितिः, अन्यथा विपरीतव्युत्पन्नस्य कस्यचित् पटपदादपि घटशाब्दबोधभावेन पटपदार्थत्वमपि घटस्य स्यादिति समाधत्ते—नेति। विपरीतेति—विपरीतव्युत्पन्नादन्यत्र तदसिद्धेरित्यन्वयः, विपरीतव्युत्पन्नभिन्नपुरुषे व्युत्पत्त्यर्थबोधं विना पदार्थबोधस्यासिद्धेरित्यर्थः। परः शङ्कते—एवमिति—व्युत्पत्तिनिमित्तक्रियापुरस्कारेणैव पदार्थबोधस्याभ्युपगमे। पारिभाषिकशब्दस्यानर्थकत्वापत्तिरेवेति समाधत्ते—आपन्नमेवेति—पारिभाषिकशब्दस्यानर्थकत्वमस्माभिरभ्युपेयत एवेति तदापादनं नानिष्टमित्यर्थः। साम्प्रतनये पारिभाषिकशब्दस्यानर्थकत्वे वृद्धसम्मतिमुपदर्शयति—तदुक्तमिति। पारिभाषिकी आधुनिकसङ्केतिता व्युत्पत्तिनिमित्तक्रियामपुरस्कृत्यैव काष्ठमयहस्त्यादौ डित्थादिसंज्ञा। पारिभाषिकसंज्ञातोऽप्यर्थबोधो भवत्येवेत्यर्थबोधकत्वेन नैमित्तिक-पारिभाषिकसंज्ञयोरविशेष एवेति शङ्कते—अथेति। 'अर्थबोधकत्वमात्रे यदि पदत्वभाव' इति स्थाने 'अर्थबोधकत्वमात्रं यदि पदत्वभावः' इति पाठः समुचितः, उक्तपाठप्रामाण्ये सति सप्तमी ज्ञेया। तदनिष्टमेवेक—मथोमिन्यतेः

तदभिव्यक्तेः किं वैषम्यमिति चेत्, न-पदानां व्युत्पत्तिनिमित्तोपकारेणैवार्थबोधकत्वस्वाभाव्यात्, यदृच्छासंकेतोपप्लवादस्वभावभूतस्यैव धर्मस्य ग्रहेण वैषम्यात् । अथ नानार्थकपदेऽर्थसंक्रमवदर्थेऽपि पदसंक्रमः किं न स्यादिति चेत्, न- अर्थस्येव पदस्यापि क्रियोपरागेण भेदादर्थासंक्रमस्वीकारात्, 'हरी'इत्यादौ च पदसारूप्येणैवैकशेषः, न त्वर्थसारूप्येणेति दिक्। अस्याप्युपदर्शितनयो भावनिक्षेप एवाभिमतः ॥७॥

नि वैषम्यम् नैमित्तिकसंज्ञातः पारिभाषिकसंज्ञायाः किं वैलक्षण्यम्?, अर्थबोधकत्वस्योभयत्र समानत्वात् । व्युत्पत्तिनिमित्तपुरस्कारेणाऽर्थबोधकत्वमेव पदानां स्वभावः, नार्थबोधकत्वमात्रम्, पारिभाषिकशब्दस्तु यादृच्छिकसङ्केतबलादस्वभावभूतमेव धर्ममात्मसात् करोतीति वैषम्यमस्त्येवेति समाधत्ते-पदानामिति। ग्रहेण परिग्रहेण। ननु यथा हर्यादिशब्दस्यैकस्यापि विष्णु-सिंहेन्द्रादिनानार्थत्वमिति पदे नानार्थसङ्क्रमः, तथैकस्यापि घटस्य घट कुटादिनानाशब्दवाच्यत्वमित्यर्थेऽपि पदसङ्क्रमोऽस्त्विति शङ्कते-अथेति। अर्थस्य क्रियावत्त्वात् क्रियोपराग, पदस्य क्रियानिमित्तकत्वात् क्रियोपराग इति एकस्य पदस्य नानार्थत्वम्, विष्णावन्यक्रियानिमित्तेन प्रवर्तमानो यो हरिशब्दः, तस्मात् तदन्यक्रियानिमित्तेन प्रवर्तमानो हरिशब्दोऽन्य एवेति पदेऽपि नार्थसङ्क्रमः, हरिश्च हरिश्च हरी इत्यादौ "स्यादावसंख्येयः" [सि० ३-१-११९] इत्यनेनैकशेषो विहित, तत्रापि पदसारूप्यादेवैकशेषः, न तु विभिन्नार्थयोस्तयोरर्थसारूप्यमिति न तन्निबन्धनैकशेष इति समाधत्ते-नेति। समभिरूढस्यापि भावनिक्षेपमात्राभ्युपगन्तृत्वमित्याह-अस्यापीति-समभिरूढस्यापीत्यर्थः ॥६॥

॥ इति समभिरूढनयनिरूपणम् ॥

"व्यञ्जना-ऽर्थविशेषान्वेषणपरोऽध्यवसायविशेष एवम्भूतः" ॥ "वंजण-अत्थ-तदुभए, एवम्भूओ विसेसेइ" ॥ [वि० आ० २१८५] इति सूत्रम् ॥

"व्यञ्जना-ऽर्थयोरेवम्भूतः" इति तत्त्वार्थभाष्यम् ॥[१.३५

तत्त्वं च पदानां व्युत्पत्त्यर्थान्वयनियतार्थबोधकत्वाभ्युपगन्तृत्वम्, नियमश्च कालतो देशतश्चेति न समभिरूढातिव्याप्तिरपि। अयं त्वत्रत्य सिद्धान्तः—यदि घट-पदव्युत्पत्त्यर्थाभावात् कुटपदार्थोऽपि न घटपदार्थस्तदा जलाहरणादिक्रियाविरहकाले घटोऽपि न घटपदार्थोऽविशेषादिति।

अथ एवम्भूतनयं निरूपयति—

व्यञ्जनेति—'व्यञ्जना-ऽर्थविशेषान्वेषणपरोऽध्यवसायविशेषः' इति लक्षणम्, 'एवम्भूतः' इति लक्ष्यम्। व्यञ्जनस्य—शब्दस्य अर्थस्य च—वाच्यस्य यो विशेषः—व्युत्पत्तिनिमित्तक्रिया-देश-कालनियमलक्षणः, तदवगाहनपरः। उक्तार्थे सूत्रं प्रमाणयति—वंजण०इति—"व्यञ्जनाऽर्थतदुभयान्येवम्भूतो विशेषयति" इति संस्कृतम्। तत्त्वार्थभाष्यसम्मतिमाह—व्यञ्जनेति। तत्त्वं च एवम्भूतत्वं च। समभिरूढातिव्याप्तिवारणायाह—नियमश्चेति—समभिरूढे यदा कदाचिद् यत्र कुत्रापि गोगमनक्रियाभावे गवि गौरिति व्यपदेशो भवतीति गोपदस्य गोरूपार्थो व्युत्पत्त्यर्थक्रियया कालतो देशतश्च न नियत इति नोक्तलक्षणस्य तत्रातिव्याप्तिरित्यर्थः। एवम्भूताभिमतत्वमुपदर्शयति—अयमिति—'यदि' इत्यादिनानन्तरमेवाभिधीयमान इत्यर्थः। अत्र एवम्भूतनयस्य। ननु जलाहरणादिक्रियाविरहकाले घटपदव्युत्पत्तिनिमित्तार्थाभावाद् यदि घटस्य न घटपदार्थत्वं तदा प्राणधारणलक्षणजीवनक्रियारूपजीवपदव्युत्पत्तिनिमित्ताभावात् सिद्धस्यापि जीवत्वं न स्यादित्यत्राह—

नन्वेवं प्राणधारणाभावात् सिद्धोऽपि न जीवः स्यादिति चेत्, एतन्नये न स्यादेव, तदाह भाष्यकारः–

"एवं जीवं जीवो संसारी पाणधारणाणुभवो।
सिद्धो पुणरजीवो जीवणपरिणामरहिओ त्ति" ॥२२५१॥

अत एव जीवो नोजीवोऽजीवो नोऽजीव इत्याकारिते० नैगमदेश-संग्रह-व्यवहारर्जुसूत्र-साम्प्रत समभिरूढा जीवं प्रत्यौपशमिकादिभावपञ्चकग्राहिणः, तन्मते व्युत्पत्तिनिमित्तजीवनलक्षणौदयिकभावोपलक्षितात्मत्वरूपपरिणामभावविशिष्टस्य जीवस्य भावपञ्चकात्मनः पदार्थत्वादिरमी पञ्चस्वपि गतिषु जीव इति जीवद्रव्यं प्रतिपन्ति, नोजीव इति च नोशब्दस्य सर्वनिषेधार्थपक्षेऽजीवद्रव्यमेव, देशनिषेधार्थपक्षे च देशस्याप्रतिषेधाज्जीवस्यैव

नन्वेवमिति। अन्नेष्टापत्तिरेव समाधानमित्याह–एतन्नय इति–एवम्भूतनय इत्यर्थः। न स्यादेव सिद्धो न भवेदेव जीवपदार्थः। उक्तार्थे भाष्यकारवचनं संवादकतयोपदर्शयति–तदाह भाष्यकार इति। एवंमिति–"एवं जीवन् जीवः संसारी प्राणधारणानुभवः। सिद्धः पुनरजीवो जीवनपरिणामरहितः" ॥१॥ इति संस्कृतम्। अत एव प्राणधारणलक्षणजीवनक्रियाकाल एवैवम्भूतनये जीवत्वाभ्युपगमादेव। 'औपशमिकादि०' इत्यादिपदादौदयिक क्षायोपशमिक-क्षायिक पारिणामिकभावानां ग्रहणम्। तन्मते नैगमादिषड्नयमते। अमी नैगमादयः षड् नयाः। पञ्चस्वपि गतिषु–नराऽमर तिर्यग्-नारक-सिद्धगतिषु। जीव इति जीव इत्येवंस्वरूपशब्देन। नोजीव इति च नोजीव इत्येवंस्वरूपशब्देन। 'अजीवद्रव्यमेव' इत्यनन्तरं 'प्रतियन्ति' इत्यनुवर्तते, एवमग्रेऽपि। देशनिषेधार्थपक्षे 'नोजीवः' इत्यत्र 'नोशब्दस्य' जीवस्य देशनिषेधार्थकत्वपक्षे। देशस्याप्रतिषेधात् यत्किञ्चिज्जीवदेशस्य प्रतिषेधेऽपि

देश-प्रदेशौ; अजीव इति नकारस्य सर्वप्रतिषेधार्थत्वात् पर्युदासाश्रयणाच्च जीवादन्यत् पुद्गलद्रव्यादिकमेव; नोऽजीव इति सर्वप्रतिषेधाश्रयणे जीवद्रव्यमेव, देशप्रतिषेधाश्रयणे त्वजीवस्यैव देशप्रदेशौ। एवम्भूतस्तु जीवं प्रत्यौदयिकभावग्राहकः, तन्मते क्रियाविशिष्टस्यैव पदार्थत्वादित्ययं जीव इत्याकारिते भवस्थमेव जीवं गृह्णाति, न तु सिद्धम्, तत्र जीवनार्थानुपपत्तेः; नोजीव इति चाजीवद्रव्यं सिद्धं वा; अजीव इति चाजीवद्रव्यमेव; नोऽजीव इति च भवस्थमेव। जीवदेश-प्रदेशौ तु सम्पूर्णग्राहित्वादनेन न स्वीक्रियेते, इत्यस्माकं प्रक्रिया। कश्चित् तु—"एवम्भूता-

त्तदीयान्यदेशस्याप्रतिषेधात्। अजीव इति अजीव इत्येवंस्वरूपशब्देन। नकारस्य न जीवोऽजीव इति समस्यमानस्य नञः। सर्वप्रतिषेधार्थत्वात् सम्पूर्णजीवस्वरूपप्रतिषेधार्थत्वात्, तथा चैवम्भूतजीवनिषेधे तद्देश-प्रदेशावपि निषिद्धावेव। एवं सति जीवान्यत्वमात्रमेव प्रतिपादितं स्यादत आह-पर्युदासाश्रयणाच्चेति-प्रसज्यनिषेधाश्रयणे हि स्याद् अन्यत्वमात्रप्रतीतिः, पर्युदासस्तु तद्भिन्नतत्सदृशग्राही, तस्याश्रयणादित्यर्थः। नोऽजीव इति नोऽजीव इत्येवंस्वरूपशब्देन। सर्वप्रतिषेधाश्रयणे नञ्द्वयस्यापि प्रत्येकं सर्वप्रतिषेधार्थत्वाश्रयणे। द्वौ नञौ प्रकृतमर्थं गमयत इति न्यायात् जीवद्रव्यमेव प्रतिपद्यन्ते। देशप्रतिषेधाश्रयणे नोशब्दस्य देशप्रतिषेधार्थत्वाश्रयणे। नैगमादीनां चतुर्णां जीव इत्यादावभिप्रायमभ्युपदर्श्य तेभ्य एवम्भूतस्य तथाभिप्रायवैलक्षण्यमुपदर्शयति-एवम्भूतस्त्विति। तन्मते एवम्भूतनयमते। 'अयम्' इत्यस्य 'गृह्णाति' इत्यनेन सम्बन्धः। अयम् एवम्भूतनयः। तत्र सिद्धे। जीवनार्था-नुपपत्तेः जीवनार्थस्य प्राणधारणस्यानुपपत्तेः। नोजीव इति इत्यादि स्पष्टम्। सम्पूर्णग्राहित्वेन सम्पूर्णवस्तुस्वरूपग्राहिणा एवम्भूतनयेन। [illegible] स्वीकरणम्। एवम्भूतमतान्तरं दिगम्बरमतेनोपदर्शयति-

भिप्रायेण सिद्ध एव जीवो भावप्राणधारणात्, न तु संसारी" इति परिभाषन्ते, तदाहुः-[द्रव्यसङ्ग्रहे]

"तिक्काले चदु पाणा इंदियबलमाउ आणपाणा य।
ववहारा सो जीवो णिच्छयदो दुचेदणा जस्स" ॥३॥इति।

न च द्विचेतनाशाली संसार्यपि जीव एवेति वाच्यम्, शुद्धचैतन्यरूपनिश्चयप्राणस्य सिद्धेष्वेव धरणात्। न च, संसारिचैतन्यमपि निश्चयतः शुद्धमेवोपरागस्य तेन प्रतिक्षेपात्, तदुक्तम् [द्रव्यसंग्रहे]—

"मग्गण-गुणठाणेहि अ चउदस य हवंति तह असुद्धणया।
विण्णेया संसारी सव्वे सुद्धा उ(हु) सुद्धणया" ॥१३॥

इतीति वाच्यम्;

एकीकृतनिश्चयेन तथाग्रहणेऽपि पृथक्कृतनिश्चयभेदेन

-प्रेतिस्थिति-'परिभाषन्ते' इत्यनेनान्वयः। पूर्वं सिद्धे श्वास प्रश्वासादिकक्षणप्राणधारणनिषेधादजीवत्वमापादितम्, एतन्मते च भावप्राण धारणलक्षणजीवपदार्थाश्रयणेन सिद्धमात्रस्य जीवत्वमुपदर्शितम्। उक्तार्थे संवादमाह-तदाहुरिति। तिक्का० इति-'त्रिकाले च द्वौ प्राणा इन्द्रियबलमायुरान-प्राणौ च। व्यवहारात् स जीवो निश्चयतोऽचेतने यस्य" ॥ इति संस्कृतम्। 'न च' इत्यस्य 'वाच्यम्' इत्यनेनान्वय। शुद्धचैतन्यं जीवे नास्तीत्यभिप्रायेण निषेधहेतुमाह-शुद्धचैतन्यरूपेति। 'न च' इति 'वाच्यम्' इत्युत्तरेण योगः। उपरागस्य-आवरणीयकर्मसम्बन्धस्य। तेन निश्चयेन। मग्गण० इति-"मार्गणगुणस्थानैश्च चतुर्दश च भवन्ति तथा अशुद्धनया.। विज्ञेयाः संसारिणः सर्वे शुद्धास्तु शुद्धनया." ॥ इति संस्कृतम्। निषेधे हेतुमाह-एकीकृतनिश्चयेनेति-चैतन्यत्वेन सर्वचैतन्यानामैक्यमेवेत्येवंभूतसंग्रहनिश्चयनयेनेत्यर्थः। तथाग्रहणेऽपि संसारिचैतन्यस्य शुद्धत्वेन ग्रहणेऽपि। पृथक्कृतनिश्चयभेदेन तत्तदात्मस्वरूपचैतन्यं तत्तदात्मभेदेन विभिन्नमेवे-

तदग्रहणादिति; तच्चिन्त्यम्–एवम्भूतस्य जीवं प्रत्यौदयिकभावग्राहकत्वात्। न चास्य क्रियाया एव प्रवृत्तिनिमित्तत्वाद् धात्वर्थ एव भावनिक्षेपाश्रयणे शुद्धधर्मग्राहकत्वमप्यनायासमिति वाच्यम्, यादृशधात्वर्थमुपलक्षणीकृत्येतरनयार्थप्रतिसंधानं तादृशधात्वर्थप्रकारकजिज्ञासयैव प्रसङ्गसङ्गत्यैवम्भूताभिधानस्य साम्प्रदायिकत्वात्, अन्यथा

स्यैवं तत्तच्चैतन्यविशेषग्राहिनिश्चयविशेषेण। तदग्रहणात् संसारिचैतन्यस्य शुद्धत्वाग्रहणात्। तच्चिन्त्यमिति–एवम्भूतनये सिद्धस्यैव भावप्राणधारणाज्जीवत्वमिति दिगम्बरमत चिन्त्यमित्यर्थः। चिन्तावीजं प्रकटयति–एवम्भूतस्येति–शुद्धचैतन्यं च पारिणामिकमिति तद्ग्राहकत्वाभावाच्च तदाश्रयणेन सिद्धस्य जीवत्वं तन्मते इति भावः। 'न च' इत्यस्य 'वाच्यम्' इत्यनेनान्वयः। अस्य एवम्भूतस्य, मते इति शेषः। क्रियाया एव प्राणधारणक्रियाया एव। प्रवृत्तिनिमित्तत्वात् जीवपदप्रवृत्तिनिमित्तत्वात्। एतावताऽपि भावप्राणधारणं न लभ्यमित्यत आह–धात्वर्थ एवेति–प्राणधारणलक्षणधात्वर्थ एवेत्यर्थः। भावनिक्षेपाश्रयणे–भावनिक्षेपश्च भावमेवाभ्युपैति, भावप्राणता च शुद्धचैतन्यस्यैवेति तदाश्रयणे। शुद्धधर्मग्राहकत्वमपि चैतन्यलक्षणशुद्धधर्मग्राहकत्वमप्येवम्भूतनयस्य। नैगमादिनयेषु व्युत्पत्तिनिमित्तजीवनलक्षणौदयिकभावरूपधात्वर्थमुपलक्षणीकृत्य तदुपलक्षितात्मत्वविशिष्ट एव जीवपदार्थः प्रतिसन्धीयते, तथा च व्युत्पत्तिनिमित्तजीवनलक्षणौदयिकभावरूपधात्वर्थप्रकारकज्ञानं मे जायतामितीच्छयैव तादृशज्ञानसाधनीवम्भूतनयाभिधानं सम्प्रदायसिद्धम्, अत एवम्भूतनयतस्तादृशज्ञानमेव जीव इत्याकारिते युक्तमित्याशयेन निषेधहेतुमुपदर्शयति–यादृशधात्वर्थमिति–शुद्धचैतन्यरूपप्राणधारणमुपलक्षणीकृत्य नेतरनयार्थप्रतिसन्धानम्, अतो न सिद्धो जीव इत्यभिमत एवम्भूतस्येति। अन्यथा उक्तरीत्यनभ्युपगमे। यत्राऽपि भावनिक्षेपाश्रयण-

तत्रापि निक्षेपान्तराश्रयणेऽनवस्थानात्, प्रकृतमात्रापर्यवसानादद्वैते शून्यतायां वा पर्यवसानात्। किञ्चैतादृगुपरितनैवम्भूतस्य प्राक्तनैवम्भूताभिधानपूर्वमेवाभिधानं युक्तम्, अन्यथाऽप्राप्तकालत्वप्रसङ्गात्। तस्माद् व्यवहाराद्यभिमतव्युत्पत्त्यनुरोधेनौदयिकभावग्राहकत्वमेवास्य, सूरिभिरुक्तं चैतदिति स्मर्तव्यम्। न चेन्द्रियरूपप्राणानां क्षायोपशमिकत्वात् कथमेवम्भूतस्यौदयिकभावमात्रग्राहकत्वमित्याशङ्कनीयम्, प्राधान्येनायुष्कर्मोदयलक्षणस्यैव जीवनार्थस्य ग्रहणात्, उपहतेन्द्रियेऽप्यायुरुदयेनैव जीवननिश्चयात्। ननु यदि जीवं प्रत्यौदयिकभाव एव

लब्धचैतन्यलक्षणमात्रप्राणधारणेऽपि। अनवस्थानस्थानं किं नादिछन्मिष्यत आह—अद्वैतेति। अद्वैते शून्यतायामपि एवम्भूतनयाभिप्रायस्य पर्यवसानमस्त्वेतावताऽपि न नः किञ्चिदपचीयत इत्युत्प्रेक्षतामारमति स्वीकुर्याद् पश्चादाशयस्तदाऽप्याह—किञ्चेति। ऐश्विकमेषणोधर्माचेहणं युक्तं न तु क्रममतिलङ्घ्यैव तद् युक्तमिति प्राक्तनमौदयिकप्राणधारणलक्षणजीवनक्रियाविशिष्टो जीवो जीवपदाभिधेय इत्येवम्भूताभिप्रेतमुपदर्श्य तदनन्तरं सूक्ष्म सूक्ष्मतरतदीयविचाराश्रयणेनैतादृगुपरितनैवम्भूतस्याभिधानं युक्तं सूक्ष्मविचारस्य स्थूलविचारपूर्वकत्वादित्याह—एतादृगिति—अनन्तरोपदर्शितरूपेत्यर्थः। प्राक्तनेति—'असौ पञ्चस्वपि गतिषु' इत्यादिनोपदर्शितेत्यर्थः। 'अभिधानपूर्वम्' इत्यस्याभिधानं पूर्वं यस्येति विग्रहः। अन्यथा प्राक्तनैवम्भूताभिधानमकृत्वैवैतादृगुपरितनैवम्भूतस्याभिधाने। उपसंहरति—तस्मादिति। अस्य एवम्भूतनयस्य। न चैतत् स्वकल्पनामात्रमित्याह—सूरिभिरिति। 'न च' इत्यस्य 'आशङ्कनीयम्' इत्यनेनान्वयः। निषेधे हेतुमाह—प्राधान्येनेति—अन्यत् स्पष्टम्। सिद्धस्य जीवत्वं भवद्भिर्युक्त्याभिहितमेवं सति कथं सङ्गतमिति शङ्कते—नन्विति। नय्येवमाद्यभिप्रायेणोक्तं न त्वेव-

नित्यत्वादिपराकरणमेकान्तानुप्रवेशादप्रमाणम्, तथापि परेषां तर्क इव प्रमाणानां स्वकल्पितविशेषरूपाणामनुग्राहकत्वादुपयुज्यत इति सम्भाव्यते, तत्त्वं तु बहुश्रुता विदन्ति। एतेषु च बलवत्त्वाबलवत्त्वादिविचारेऽपेक्षैव शरणम्, निश्चयव्यवहाराभिमतकारणानामानन्तर्यपारम्पर्यव्यवस्थितानामप्यपेक्षाऽविशेषात्, पूर्वेण परस्योपक्षयाद् विशेष इति चेत्, न-इच्छामात्रशरणत्वात्।

चेत्यर्थः। परेषां नैयायिकादीनाम्। तर्को यथा प्रमाणानामनुग्राहकत्वादुपयुज्यते तथा स्वकल्पितविशेषरूपाणां नयानामनुग्राहकत्वान्नित्यत्वादिपराकरणमुपयुज्यते, नहि प्रमाणमेवानुग्राहकमिति नियमस्तथा सति आहार्यारोपरूपस्य तर्कस्यापि प्रमाणानुग्राहकत्वं परसम्मतं न स्यादिति नित्यत्वादिनिराकरणस्याप्रमाणस्यापि नयानुग्राहकत्वं न दुष्टमित्याशयः। एतेषां बलवत्त्वाऽबलवत्त्वादिविचारोऽप्यपेक्षात एव तत्रैको नय एकनयापेक्षया बलवानन्यनयापेक्षया दुर्बल इत्येकत्रापि नये आपेक्षिके बलवत्त्वाऽबलवत्त्वे न विरुद्धे इत्याह-एतेषु चेति। यच्चानन्तर्येण कारणं यच्च पारम्पर्येण कारणं तयोरपि कारणत्वमविशिष्टमेव अपेक्षाया अविशेषादित्याह निश्चयेति-निश्चयनये यदेवाव्यवहितपूर्ववर्ति तदेव कारणमिति तस्यानन्तर्यव्यवस्थितत्वम्, व्यवहारनये व्यवहितपूर्ववर्त्यपि कारणतया व्यवह्रियमाणत्वात् कारणं भवत्येवेति तस्य पारम्पर्यव्यवस्थितत्वमिति। शङ्कते पूर्वेणेति पूर्वेणानन्तरकारणेनापरस्य परम्पराकारणस्य। व्यापारेण व्यापारिणोऽन्यथासिद्धिरित्युपगम एवानन्तरकारणेन परम्पराकारणस्यान्यथासिद्धिरिति स्वेच्छापरिकल्पितनियमत एव, एवं च व्यापारिणा व्यापारस्यान्यथासिद्धिरिति नियमोऽपीच्छया किं न स्यादिति समाधत्ते-न इच्छामात्रशरणत्वादिति। ज्ञाननयात् क्रियानये

क्रियानये स्वविषयसमवधाननियतेतरविषयसमवधानं विशेषः, इति चेत्, न– चरमकारणीभूतक्रियाजनकज्ञानविषयत्वात् ज्ञाननयस्यापि विशेषात्। क्रियानये कार्योपयिको विशेषः, ज्ञाननये तु व्यवहारोपयिक इति चेत्, न– ज्ञाननयविशेषस्यापि परम्परया कार्योपयिकत्वात्, पारम्पर्यानन्तर्ययोर्विशेषश्चेच्छामात्रादेवेत्युक्तम्। अत एव 'इतरकारणविशिष्टं चरमकारणं सामग्री' इति सामग्रीलक्षणमन्यत्र निराकृतम्, विनिगमनाविरहात्। न च

---

विशेषमाशङ्कते–क्रियानय इति– चरमभूतनय इत्यर्थः। चरमभूतनये क्रियाया प्राधान्यात् क्रियानयत्व बोध्यम्, ततो ज्ञाननये विशेषो पदर्शनेन समाधत्ते नेति। विशेषेऽपि विशेषमाशङ्कते–क्रियानय इति। उक्तविशेषस्योभयत्र समानत्वेन न विशेषकत्वमिति समाधत्ते–न–ज्ञाननयविशेषस्यापीति। पारम्पर्यानन्तर्यकृतविशेषस्येच्छामात्रकारणत्वेन न विशेषकत्वमित्याह–पारम्पर्येति। 'अत एव' इत्यस्य 'निराकृतम्' इत्यनेन सम्बन्ध, अत एव इच्छामात्रशरणत्वादेव। इच्छामात्रशरणत्वेन विनिगमनाविरह एवोपदर्शितो भवतीत्याह–विनिगमनाविरहादिति– इतरकारणविशिष्टं चरमकारणं सामग्री चरमकारणविशिष्टानीतरकारणानि वा सामग्रीत्यत्र विनिगमकस्य कस्यचिदभावाद् द्वितीयपक्षाश्रयणे परम्पराकारणस्यापि प्राधान्यमप्रत्यवादित्याशय। न च चरमकारणस्य साक्षादेव सम्बन्ध कारणत्वात्स्वजनकसम्बन्ध, परम्पराकारणस्य तु स्वजन्यव्यापारवत्त्वादिस्तथेति सम्बन्धलाघवमितरकारणविशिष्टं चरमकारणं सामग्रीत्यत्र विनिगमकमित्याशङ्क्य प्रतिक्षिपति–न चेति। चरमकारणे इतरकारणवैशिष्ट्य सामानाधिकरण्यसम्बन्धेन तत्र चेतरकारणस्याधिकरणता परम्परासम्बन्धरूपकारणतावच्छेदकसम्बन्धावच्छिन्नैव नियतेति सम्बन्धघटकतया तद्ग्रहस्यावश्यकत्व सम्बन्धलाघवासिद्धेरिति प्रतिक्षेपहेतुमुपन्यस्यति–[illegible]

सम्बन्धलाघवं विनिगमकम्, विशेष्य इव विशेषणे तत्सम्बन्धग्रहावश्यकत्वे तदसिद्धेरिति दिक्। स्यादेतत्–कुर्वद्रूपत्वाच्चरमकारणमेव क्रियानयाभिमतं कारणं युक्तम्, नान्यत्, अत एव क्रियासिद्ध्यैव कुर्वद्रूपत्वोपपत्तौ क्रियमाणं कृतमेवेति वदन्ति। न चैवं कृतकरणासमाप्तिः, सिद्धस्यापि साधने करणव्यापारानुपरमादिति वाच्यम्, कार्यमुत्पाद्य क्रियोपरमेण तत्समाप्तेः। न च यादृशव्यापारवतां दण्डादीनां पूर्वं सत्त्वम्, तादृशानामेव तेषां कथिद्

ति। तदसिद्धेः सम्बन्धलाघवासिद्धेः। 'स्यादेतत् कुर्वद्रूपत्वाच्चरमकारणमेव क्रियानयाभिमतं युक्तम्' इत्यारभ्य 'गम्भीरनयमतं कियदिह विविच्यते' इत्यन्तं क्रियानयोपपादिका प्रश्नस्वरूपेणोल्लिखितैका फक्किका। समर्थस्य विलम्बायोगात् कुशूलस्थबीजं यद्यङ्कुरसमर्थं तदा तदानीमप्यङ्कुरं कुर्यादेव, अथासमर्थं तदा तेन कदाचिदप्यङ्कुरं न स्यादेव, अङ्कुरकार्याऽसमर्थशिलाशकलतः कदाचिदप्यङ्कुरानुपजननात्। सहकारिसमवधाने सति सामर्थ्यं तदसमवधानेऽसामर्थ्यमित्यपि न युक्तं स्वयमसामर्थ्ये सहकारिभिरपि सामर्थ्यालम्भनात् स्वयं सामर्थ्य चालं सहकारिभिः। किञ्च–सहकारी तत्र किञ्चिदुपकारं विदधाति न वा ?, द्वितीयेऽनुपकारिणस्तस्यापेक्षाऽयोगात्, आद्ये उपकारेऽपि कर्तव्ये सहकार्यन्तरापेक्षाऽऽवश्यकीत्यनवस्थेत्यादियुक्तिभिः कुर्वद्रूपत्वलक्षणवैजात्येनैव कारणत्वम्, कुर्वद्रूपत्वं च चरमकारणस्यैवेति कुर्वद्रूपत्वाच्चरमकारणमेव कारणं युक्तमित्यर्थः। नान्यत् चरमकारणादन्यच्च न कुर्वद्रूपमिति न तत्कारणम्। अत एव कुर्वद्रूपत्वाच्चरमकारणस्यैव कारणत्वादेव। 'न च' इत्यस्य 'वाच्यम्' इत्यनेनान्वयः। एव क्रियमाणं कृतमेवेत्युपगमे। कृतकरणासमाप्तौ हेतुमाह–सिद्धस्यापि साधन इति–निष्पन्नस्यापि निष्पादन इत्यर्थः। प्रतिक्षेपे हेतुमाह–कार्यमुत्पाद्येति। तत्समाप्तेः कृतकरणसमाप्तेः। 'न च' इत्यस्य 'वाच्यम्' इत्यनेनान्वयः। यादृशव्यापारवतां चक्रभ्रमणा-

घटोत्पत्त्यनन्तरमपि सत्त्वं भवेत्, तदा तदुत्पत्तिप्रसङ्ग इति वाच्यम्, स्थूलतत्सत्त्वेऽपि सूक्ष्मक्रियाविगमात्। न च तत्क्रियाया घटोत्पत्तेः प्राक् सत्त्वे तदापि तदुत्पत्तिप्रसङ्गः, असत्त्वे च कार्याव्यवहितपूर्ववृत्तित्वाभावेन कारणत्वानुपपत्तिरिति वाच्यम्, कार्यव्याप्यतावच्छेदकपरिणामविशेषरूपकारणतायाः कार्यसहवृत्तितानियमात्। अत एव कुर्वद्रूपत्वमप्रामाणिकम्, बीजत्वादिना साङ्कर्याज्जातिरूपत्वासिद्धेरिति निरस्तम्। अथैवं चक्रभ्रमणा-

चनुकूलक्रियावताम्। पूर्वं घटोत्पत्त्यव्यवहितपूर्वम्। अन्यतमानामेव तादृग्व्यापारवतामेव। तेषां दण्डादीनाम्। तदा घटोत्पत्त्यनन्तरकाले। तदुत्पत्तिप्रसङ्गः घटोत्पत्तिप्रसङ्गः। निषेधे हेतुमाह—स्थूलतत्सत्त्वेऽपीति—स्थूलतादृग्व्यापारसत्त्वेऽपीत्यर्थः। सूक्ष्मक्रियाविगमात् कुर्वद्रूपात्मकक्रियाऽभावात्। 'न च' इत्यस्य 'वाच्यम्' इत्यनेन योगः। तत्क्रियाया घटोत्पत्तिकुर्वद्रूपदण्डादिक्रियायाः। तदापि घटोत्पत्तिप्राक्कालेऽपि। तदुत्पत्तिप्रसङ्गः। घटोत्पत्तिप्रसङ्गः। असत्त्वे च घटोत्पत्तेः प्राक्काले घटोत्पत्तिकुर्वद्रूपदण्डादिक्रियाया अभावे च। यत्र च कारणस्य परिणामविशेषवत्त्वं तदा कार्यमित्येव कार्यकारणयोः समनियतत्वेन व्याप्तिरिति कार्योत्पत्तिकाले घटोत्पत्तिपरिणामविशेषलक्षणकारणमिति हेतुमुपदर्शयति—कार्येति। तादृशपरिणामविशेषस्य कुर्वद्रूपत्वमेवेति कुर्वद्रूपत्वमपि प्रामाणिकमेवेत्याशयः। अत एव उक्तव्याप्यतावच्छेदकतया कुर्वद्रूपत्वस्य सिद्धत्वादेव, अस्य 'निरस्तम्' इत्यनेनान्वयः। बीजत्वादिनेति—आदिपदाद् दण्डत्वादेरुपग्रहः, बीजत्वाभाववति घटकुर्वद्रूपात्मकदण्डादौ कुर्वद्रूपत्वस्य सत्त्वम्, कुर्वद्रूपत्वाभाववति कुसूलस्थबीजे बीजत्वस्य सत्त्वम्, उभयोश्च कुर्वद्रूपात्मकबीजे सत्त्वमिति साङ्कर्यम्, बीजत्वव्याप्यतया कुर्वद्रूपत्वाभ्युपगमोऽपि न सम्भवति तथापि दण्डत्वादिना साङ्कर्यसम्भवात्। अनेनानयैव जातिरूपस्य

द्युपलक्षितदीर्घक्रियाकाले कुतो न दृश्यते घटः ? यदि क्रियमाणः कृत एवेति चेत्, न– क्रियाया दीर्घकालत्वासिद्धेश्चरमसमये तदभ्युपगमात्, घटगताभिलाषोत्कर्षवशादेव मृन्मर्दनाद्यान्तरालिककार्यकरणवेलायां घटं करोमीति व्यवहारात्; तदुक्तम्–[वि० भाष्ये]–

"पइसमयकज्जकोडी-णिरवेक्खो घडगयाहिलासो सि ।
पइसमयकज्जकालं थूलमई! घडंमि लाएसि" ॥२३१८॥ इति।

द्धुपेद्रूपसम्यासिद्धेः, आन्तिरूपस्य तस्याभावेऽपि परिणामविशेषरूपस्य तस्य सम्भव एवेति निराकरिष्णुः । ननु मृदानयन तन्मर्दन–तन्नकोपरिस्थापन-चक्रभ्रमणादिक्रियाकलापः सर्वोऽपि घटोत्पादनानुकूलत्वाद् घटस्य क्रियमाणकालस्य एवेति चरमक्रियासमय इव, तत्पूर्वक्रियाकालेऽपि घटस्य क्रियमाणत्वे कृतत्वमायातिनिष्पन्नस्य सतस्तस्य प्रत्यक्षं स्यादित्याशङ्कते–अथेति । एवम् एतन्मते क्रियमाणस्य कृतत्वाभ्युपगमे । घटकुर्वद्रूपात्मिका क्रिया यदनन्तरं घटो भवत्येव तदानीमेव, न तु दीर्घकालिकी सेति चरमसमय एव क्रियमाणत्वं तदानीमेव च कृतत्वमिति न पूर्वसमये घटोपलब्धिरिति समाधत्ते–नेति । तदभ्युपगमात् घटकुर्वद्रूपात्मकक्रियाऽभ्युपगमात् । ननु यदि चरमसमय एव घटस्य क्रियमाणत्वं तदा मृन्मर्दनादिवेलायां घटं करोमीति व्यवहारानुपपत्तिरित्यत आह–घटगतेति–घटस्य निष्पत्तिर्यद्यपि चरमसमय एव, तथा घटभवनगोचरोत्कटेच्छावशादेव मृन्मर्दनादिवेलायामपि घटं करोमीति व्यवहार इत्यर्थः। उक्तार्थे भाष्यसम्मतिमुपदर्शयति–तदुक्तमिति । पइसमय० इति–"प्रतिसमयकार्यकोटीनिरपेक्षो घटगताभिलाषोऽसि । प्रतिसमयकार्यकालं स्थूलमते ! घटे लगयसि" इति संस्कृतम् । क्रियमाणस्य कृतत्वमेव यदि तर्हि 'कृतं निष्पन्नमेवेति तत्र क्रियावैफल्यमिति न शङ्कनीयम्, क्रियात एव तन्निष्पत्तिर्भवति, क्रियामन्तरेण कृतत्वस्यैवाघटमानत्वेन निष्ठार्थे क्रियायाः साफल्यादित्याह–कृतस्यैवेति ।

कृतस्यैव करणे क्रियावैफल्यमित्यपि न रमणीयम्, क्रिययैव निष्ठां जनयित्वा कार्यस्य कृतत्वोपपादनात्। कृतमेव क्रिया जनयति, नाकृतम्, असत्त्वात्, क्रियाजनितत्वाच्च कृतमित्यन्योऽन्याश्रय इति चेत्, न– घटत्वादिनैव घटादिक्रियाजन्यत्वात्, तत्र कृतत्वाप्रवेशादार्थादेव समाजात् कृतत्वोपपत्तेः। यदि च क्रियमाणं न कृतम्, तदा क्रियासमये कार्याभावात् तत्पूर्वं तत्पश्चाच्च कारणाभावात् तत्कार्यं न भवेदेव। सामग्र्यास्तदुत्तरसमय एव कार्यव्याप्यत्वोपगमान्नैष दोष इति चेत्, न– सामग्रीसमयस्यैव कार्यव्याप्यत्वोपगमौचित्यात्, व्याप्तावुत्तरत्वाप्रवेशेन

कृतस्य क्रियातो भावेऽन्योऽन्याश्रयमाशङ्कते-कृतमेवेति। असत्त्वात् अकृतस्यासत्त्वाद्भावात्, तथा च कृतत्वे सति क्रियाजन्यत्वम्, क्रियाजन्यत्वाच्च कृतत्वमित्यन्योऽन्याश्रय इत्यर्थः। कृतत्वावच्छिन्नं प्रति क्रियात्वेन कारणत्वमित्येव नेष्यते, येनाऽन्योऽन्याश्रयः स्यात्, किन्तु घटत्वावच्छिन्नं प्रति क्रियात्वेन कारणत्वम्, क्रियात उत्पन्नत्वात्तु कृतत्वमर्थात् सिद्धमिति समाधत्ते नेति। तत्र क्रियाजन्यतायाम्। क्रियमाणस्य कृतत्वानभ्युपगमे दूषणमाह यदि चेति। तत्पूर्वं क्रियासमयात् पूर्वम्। तत्पश्चाच्च क्रियासमयात् पश्चाच्च। यदा सामग्री तदनन्तरं कार्यं भवत्येव व्याप्तिरिति क्रियासमयात् पश्चात् कारणाभावेऽपि क्रियासमये कारणसत्त्वात् कार्यं स्यादेवेति शङ्कते-सामग्र्या इति। तदुत्तरसमय एव सामग्र्युत्तरसमय एव। नैष दोषः न कार्याभवनलक्षणो दोषः। यदा सामग्री तदा कार्यमिति समसमयत्वेनैव तयोर्व्याप्तिर्निर्णयात्, न तु यदा सामग्र्युत्तरत्वं तदा कार्यमिति व्याप्तिर्गौरवादिति समाधत्ते-नेति। यदा कारणाभावस्तदा कार्याभाव इत्येव व्याप्तिर्न तु यदा कारणोत्तरत्वाभावस्तदा कार्याभावो गौरवादिति कारणोत्तरकाले कारणाभावात् कार्याभावस्यैव प्रसक्तिरि

लाघवात्, कारणाभावस्यैव कार्याभावव्याप्यत्वेन कारणोत्तरकालेऽपि कार्यासिद्धेश्च। अथ क्रियमाणमित्यत्र वर्तमानत्वमानशोऽर्थः, कृतमित्यत्र चातीतत्वं निष्ठार्थः; तत्र वर्तमानत्वं विद्यमानकालवृत्तित्वम्, अतीतत्वं च विद्यमानध्वंसप्रतियोगिकालवृत्तित्वम्, विद्यमानत्वं च तत्तत्प्रयोगाधारत्वम्, प्रयोगत्वं च तत्तदर्थोपस्थित्यनुकूलव्यापारत्वं तिप्युच्चारणादिसाधारणं तदादेर्बुद्धिस्थत्ववद्धटादेः शक्यतावच्छेदकतत्तत्कालानुगमकम्, तच्च वर्तमानत्वमतीतत्वं वा धात्वर्थेऽन्वेति; धातूत्तरप्रत्ययजन्यकालप्रकारकबोधे समानविशेष्यत्वप्रत्यासत्त्या धातुजन्योपस्थितेर्हेतुत्वात्, अत एव नातीतघटज्ञानाश्रये घटं

स्यादिह-कारणाभावस्यैवेति। क्रियमाणत्व कृतत्वयोर्विरोधान्नैकत्र सम्भव इति क्रियमाणं कृतमित्यन्वयानुपपत्तिरित्याशङ्कते-अथेति। तयोर्विरोधोपपत्तये तत्स्वरूपविशेषाऽवबोधनाय चाऽऽनशाद्यर्थमुपदर्शयति-क्रियमाणमित्यत्रेति। निष्ठार्थः क्तप्रत्ययार्थः। तत्र वर्तमानत्वातीतत्वयोर्मध्ये। तदादेरिति-बुद्धिस्थत्वोपलक्षितधर्मावच्छिन्ने शक्तिरिति तच्छक्यतावच्छेदकस्य घटस्य पटत्वादेरनुगमकं यथा बुद्धिस्थत्वं तथा तत्तत्प्रयोगाधारकालवृत्त्यादौ शक्तस्य घटादेः शक्यतावच्छेदकतत्तत्कालानुगमकं वर्तमानत्वादिकमित्यर्थः। समानविशेष्यत्वप्रत्यासत्त्येति-विशेष्यतासम्बन्धेन धातूत्तरप्रत्ययजन्यकालप्रकारकबोधं प्रति विशेष्यतासम्बन्धेन धातुजन्योपस्थितिः कारणमिति विशेष्यतासम्बन्धेन धातुजन्योपस्थितिर्धात्वर्थ एवेति तत्रैव धातूत्तरप्रत्ययार्थस्यान्वय इत्याशयः। अत एव प्रत्ययार्थस्य वर्तमानत्वातीतत्वादेर्धात्वर्थेऽन्वयादेव। घटं जानातीत्यत्र लट्प्रत्ययार्थस्य वर्तमानत्वस्य ज्ञाधात्वर्थे ज्ञानेऽन्वयेनातीतज्ञाने तद्बाधेन नातीतघटज्ञानमादाय घटं जानातीति

जानातीति प्रयोगप्रसङ्गः, न चैवमारम्भसमये पचतीति प्रयोगो न स्यात् तदा पाकाभावादिति वाच्यम्, स्थूलकालमादाय तत्समाधानात्, तस्मात् क्रियमाणं कृतमित्यन्वयानुपपत्तिरिति चेत्, न-एवं सत्यारम्भकाल इव तत्पूर्वकालेऽप्येकस्थूलकालसम्भवेन पचतीति प्रयोगप्रसङ्गाद् व्यवहारानुकूलप्रयोगादरस्य वस्त्वसाधकत्वात्, अन्यथा 'पुरुषो व्याघ्रः' इति प्रयोगात् पुरुषस्यापि व्याघ्रत्वप्रसङ्गः। किञ्च,एवं 'नष्टो घटः', 'नश्यन् घटः' इत्यादिप्रयोगव्यवस्थायां तव का गतिः?, नाशस्योक्तातीतत्वायोगात्, नष्टेऽपि घटे

प्रयोगप्रसङ्ग इत्यर्थः। 'न च' इत्यस्य 'वाच्यम्' इत्यनेनान्वयः। एवं प्रत्ययार्थस्य वर्तमानत्वादेर्धात्वर्थे पचावन्वयाऽभ्युपगमे। आरम्भसमये पाकारम्भकाले। तदा पाकारम्भकाले। पाकारम्भक्षणमारभ्य यावता कालेन पाको निष्पद्यते तावान् सर्वोऽपि कालः पाकाधिकरणतया विवक्ष्यते, स च सूक्ष्मरूपेणानेकोऽपि, स्थूलरूपेणैक एव, तादृशवर्तमानकालश्च पाकारम्भसमयादारभ्य पाकपरिसमाप्तिं यावदेक एवेति तद्वृत्तित्वात् पाकारम्भसमयेऽपि पचतीति प्रयोगः स्यादेवेति समाधत्ते-स्थूलकालमादायेति। तत्समाधानात् पाकारम्भसमये पचतीति प्रयोगसम्भवात्। शङ्कितां स्वाभिप्रेतमुपसंहरति-तस्मादिति। समाधत्ते-नेति। एवं सति स्थूलकालमुपादाय पाकारम्भकाले पचतीति प्रयोगस्योपपादने। तत्पूर्वकालेऽपि आरम्भकालात् पूर्वकालेऽपि। ननु पाकारम्भपूर्वकाले पचतीति न व्यवह्रियत इति न तत्कालव्यापिस्थूलकालमुपादीयते, पाकारम्भकाले तु भवति तथाव्यवहार इति तत्कालव्यापिस्थूलकालमुपादाय तथाव्यवहारसम्भव इत्यत आह-व्यवहारानुकूलप्रयोगादरस्येति। अन्यथा व्यवहारानुकूलप्रयोगतोऽपि वस्तुसिद्ध्यभ्युपगमे। उक्तातीतत्वायोगात्-यद्यपि नाशस्य पूर्वमेव

विद्यमाननाशप्रतियोगित्वाद् वा । अथ तत्रातीतत्वं वर्तमानत्वं च कृत्प्रत्ययार्थोत्पत्तावेवान्वेतीति न दोष इति चेत्, न–उक्तनियमभङ्गप्रसङ्गात् । धातुत्व-प्रत्ययत्वादेर्नानात्वात् तन्नियमस्य विशिष्य विश्रान्तिरिति चेत्, न–अन्ततो

जातस्येदानीमपि वर्तमानस्य विद्यमानो यो भूतकालस्य नाशस्तत्प्रतियोगी भूतकालस्तद्वृत्तित्वमस्तीत्युक्तातीतत्वयोग एव, तथाऽपीदृशातीतत्वं विद्यमानघटेऽपि समस्ति, यतो विद्यमानो ध्वंसः पूर्वकालस्य ध्वंसस्तत्प्रतियोगी पूर्वकालस्तद्वृत्तित्वस्य तत्र सत्त्वात्, अतस्तादृशकालमात्रवृत्तित्वं विवक्षणीयम्, तच्च यथा न वर्तमानघटे तथा नोक्तध्वंसेऽपीत्याशयः । यदि च मात्रार्थमनिवेश्यैव तत्रातीतत्वमुपपाद्यते तदा पूर्वजातोऽपि ध्वंसो विद्यमानकालवृत्तित्वाद् वर्तमान इति तत्प्रतियोगित्वाद् विनष्टस्यापि घटस्य विनश्यन्मानत्वं स्यादित्याह–नष्टेऽपि घट इति । यस्य घटस्य नाशः पूर्वमेव जातः स एव विनष्ट इत्युच्यते तन्नाशस्योत्पादो न वर्तमानवृत्तीति विद्यमानकालोत्पत्तिकनाशप्रतियोगित्वाभावान्न नष्टघटे नश्यन् घट इति प्रयोगापत्तिः, अतीतकालोत्पत्तिकध्वंसप्रतियोगित्वाभावान्न नश्यद्घटे न नष्टो घट इति प्रयोगापत्तिश्चेति शङ्कते–अथेति । समाधत्ते–नेति । उक्तनियमभङ्गप्रसङ्गात् प्रत्ययार्थोत्पत्तौ प्रत्ययार्थस्य वर्तमानत्वस्यातीतत्वस्य चान्वयाभ्युपगमे, विशेष्यतासम्बन्धेन धातूत्तरप्रत्ययजन्यकालप्रकारकबोधं प्रति विशेष्यतासम्बन्धेन प्रत्ययजन्योपस्थितिः कारणमिति कार्यकारणभावमूलकस्य प्रत्ययार्थवर्तमानत्वातीतत्वयोर्धात्वर्थ एवान्वय इति नियमस्य भङ्गापत्तेः । न च तत्तद्धातूत्तरप्रत्ययजन्यकालप्रकारकबोध एव समानविशेष्यत्वप्रत्यासत्त्या तत्तद्धातुजन्योपस्थितेर्हेतुत्वमिति विशिष्यैव कार्य-कारणभावः, धातुत्व-प्रत्ययत्वयोरनुगतत्वाभावेन सामान्यकार्य-कारणभावाभावात्, तथा चोक्तकार्यकारणभावमूलकनियमोऽपि विशिष्य विश्रान्त एवेति नोक्तदोष इत्याशङ्कते–धातुत्व-प्रत्ययत्वादेरिति । तन्नियमस्य धात्वर्थ एव प्रत्ययार्थकालान्वय इति नियमस्य ।

धातुपदवत्त्वादिनाऽपि तदनुगमात्। अथान्यत्राप्येकपदोपात्तत्वप्रत्यासत्त्या कृत्यादिस्वार्थ एव स्वार्थकालान्वयो व्युत्पत्तिवैचित्र्यात्, न च पचत्यपि भाविकृतिप्रागभावमाद्यकृतिध्वंसं चादाय पक्ष्यत्यपाक्षीदिति प्रयोगप्रसङ्ग

---

सङ्केतविशेषसम्बन्धेन धातुपदवत्त्वं धातुत्वम्, सङ्केतविशेषसम्बन्धेन प्रत्ययपदवत्त्वं प्रत्ययत्वम्, इत्येवं तयोरप्यनुगतयोः सम्भवात् सामान्यकार्यकारणभावसम्भवेन तन्मूलकसामान्यनियमस्यापि सम्भवेन तन्मूलकदोषस्य परिहर्तुमशक्यत्वादिति समाधत्ते-नेति। अखण्डोपाध्यादिरूपस्यापि धातुर्धातुरिति प्रतीतिनियामकस्य धातुत्वस्य तथैव प्रत्ययत्वस्यापि तथाभूतस्य भवत्येव सम्भवस्तथाऽप्यनभ्युपगमे आह-अन्ततः इति। तदनुगमात् धात्वादेरनुगमात्। ननु सर्वत्र प्रत्ययार्थवृत्त्यादावेव प्रत्ययार्थवर्तमानत्वादेरन्वय उपेयते, न चोक्तकार्यकारणभावः स्वीक्रियते, नवोक्तनियमोऽपीति, हृयादेकपदोपात्तयोः सूर्योभ्याद्योरन्वयबोधाभावेऽप्येवकारपदोपात्तयोरन्वयबोधस्य दर्शनादेकपदोपात्तयोरन्वय इति नियमाभावात् व्युत्पत्तिवैचित्र्येणैकपदोपात्तयोरन्वयोपगमे क्षत्यभावादित्याशङ्कते-अथेति। अन्यत्रापि अन्यधातुस्थलेऽपि। कृत्यादिस्वार्थे एव कृत्यादिलक्षणप्रत्ययार्थे एव, एवकारेण धात्वर्थे प्रत्ययार्थकालादेरन्वयस्य व्यवच्छेदः। स्वार्थकालान्वय प्रत्ययार्थकालान्वयः। 'न च' इत्यस्य 'वाच्यम्' इत्यनेनान्वयः। पचत्यपि पाकानुकूलवर्तमानकृतिमत्यपि पुरुषे। भावीति-भाविकृतिप्रागभावमादाय पक्ष्यतीति प्रयोगप्रसङ्गः, आद्यकृतिध्वंसमादायाऽपाक्षीदिति प्रयोगप्रसङ्ग इत्येवमन्वय। पक्ष्यतीत्यत्राद्यकृतिप्रागभावकालवृत्तित्वमपाक्षीदित्यत्र चरमकृतिध्वंसकालवृत्तित्वं प्रत्ययार्थः, तथा च पाकानुकूलवर्तमानकृतिसद्भावकाले आद्यकृतिप्रागभावासत्त्वाच्चरमकृतिध्वंसासत्त्वाच्च नोक्तप्रसङ्ग इति प्रतिक्षेपहेतुमुपन्यस्यति-

इति वाच्यम्, आद्यकृतिप्रागभावचरमकृतिध्वंसयोर्भविष्यदतीतप्रत्ययार्थत्वादिति चेत्, न—जानातीत्यादौ धात्वर्थे कालान्वयदर्शनात्। अस्तु वा, तथापि कृत्प्रत्ययार्थोत्पत्तेः प्रातिपदिकार्थे घटे कथमन्वयोऽयोग्यत्वात्। परम्परासम्बन्धेन तत्र तदन्वयोपपत्तिरिति चेत्, न—विद्यमानघटे न नष्टो घट इति प्रयोगानापत्तेः, वृत्त्यनियामकसम्बन्धस्याभावप्रतियोगितानवच्छेदकत्वात्। उत्पत्तेर्धात्वर्थं तस्य च प्रातिपदिकार्थेऽन्वयान्न दोष इति चेत्,

---

भावदनीति। जानातीत्यादौ ज्ञान एव वर्तमानकालवृत्तित्वस्यान्वयोपगमेन प्रत्ययार्थ एव प्रत्ययार्थवर्तमानकालादेरन्वय इति नियमानभ्युपगमादिति समाधत्ते—नेति। धात्वर्थे कालान्वयदर्शनाद् धात्वर्थे ज्ञाने प्रत्ययार्थवर्तमानकालस्यान्वयदर्शनात्। भवतु ज्ञाधातुव्यतिरिक्तस्थले सर्वत्र प्रत्ययार्थ एव प्रत्ययार्थकालादेरन्वय इत्येवमुपगमेऽपि कृत्प्रत्ययार्थनाशोत्पत्तेर्नाश एव सम्भवेन घटे तदन्वयासम्भवान्नष्टो घटो नश्यन् घट इति प्रयोगानुपपत्तिरित्याह—अस्तु वेति—प्रत्ययार्थे प्रत्ययार्थकालादेरन्वयोऽस्तु वेत्यर्थः। तथापि उक्तान्वयसम्भवेऽपि नाशोत्पत्तेरपि स्वाश्रयनाशप्रतियोगित्वलक्षणपरम्परासम्बन्धेन घटेऽन्वयो भविष्यतीति शङ्कते—परम्परासम्बन्धेनेति। तत्र घटे। तदन्वयोपपत्तिः नाशोत्पत्त्यन्वयोपपत्तिः। नाशोत्पत्तेः स्वाश्रयनाशप्रतियोगित्वसम्बन्धो वृत्त्यनियामक एवेति तस्य प्रतियोगितानवच्छेदकत्वेन तत्सम्बन्धावच्छिन्नप्रतियोगिताकनाशोत्पत्त्यभावस्याप्रसिद्ध्या बोधयितुमशक्यत्वेन विद्यमानघटे न नष्टो घट इति प्रयोगानुपपत्तिरिति समाधत्ते—नेति। नष्टो घट इत्यत्रातीतत्वस्य प्रत्ययार्थस्य प्रत्ययार्थोत्पत्तावन्वयः, तस्याश्च विशेषणविधया धात्वर्थे नाशेऽन्वयः, तस्य च प्रतियोगितासम्बन्धेन घटेऽन्वय इत्यतीतोत्पत्तिमन्नाशप्रतियोगी घट इति बोधसम्भव इत्याशङ्कते—उत्पत्तेरिति। तस्य च धात्वर्थस्य

न-नामार्थयोः साक्षाद्भेदसम्बन्धेनान्वयायोगात्, अन्यथा तण्डुलं पचतीत्यत्रापि कर्मत्वसंसर्गेण प्रातिपदिकार्थस्य धात्वर्थेऽन्वयप्रसङ्गात्। अथ भेदेन निपातान्यनामार्थ-प्रकारकबोधे समानविशेष्यत्वप्रत्यासत्त्या निपात-प्रत्यया-न्यतरजन्योपस्थितेर्हेतुत्वात् नामार्थप्रकारकधात्वर्थविशे-ष्यकबोधासम्भवेऽपि धात्वर्थप्रकारकनामार्थविशेष्यक-

पुनः। प्रतियोगित्वं स्वरूपसम्बन्धविशेष एव, तस्य च वृत्ति-नियामकत्वमपीति भवति विद्यमानघटे न नष्टो घट इति प्रयोगस्याप्युपपत्तिरित्यभिमानः। यथा च नामार्थयोः साक्षाद् भेदसम्बन्धेन नान्वयस्तथा नामार्थधात्वर्थयोरपीति धात्वर्थस्य नाशस्य प्रतियोगित्वाख्यभेदसम्बन्धेन नामार्थे घटे नान्वयसम्भव इति समाधत्ते-नेति। 'नामार्थयो' इति स्थाने 'नामार्थ धात्वर्थयोः' इति पाठो युक्तः। अन्यथा नामार्थ धात्वर्थयोरपि साक्षाद् भेदसम्बन्धेना-न्वयाभ्युपगमे। कर्मत्वसंसर्गेणेति-विभक्त्यर्थस्य कर्मत्वस्य संसर्गतया भानमाश्रित्य। प्रातिपदिकार्थस्य तण्डुलपदरूपप्रातिपदिकार्थस्य तण्डुलस्य। धात्वर्थे पच्धात्वर्थे पाके। नष्टो घट इत्यत्र धात्वर्थस्य नाशस्य प्रकारविधयैव नामार्थे घटेऽन्वय उररीक्रियते, तदुपपत्तये प्रकारा-न्तरमाशङ्कते-अथेति। समानेति-विशेष्यतासम्बन्धेन भेदसम्बन्धाव-च्छिन्ननामार्थनिष्ठप्रकारताकबोधं प्रति विशेष्यतासम्बन्धेन निपात-प्रत्ययान्यतरजन्योपस्थिति कारणमिति कर्मत्वसम्बन्धावच्छिन्न-तण्डुलनिष्ठप्रकारताकबोधस्य विशेष्यतासम्बन्धेन पाके उत्पत्तिस्तदा स्याद् यदि तत्र निपातप्रत्ययजन्योपस्थितिर्विशेष्यतासम्बन्धेन भवेत्, तदभावाच्च नामार्थतण्डुलप्रकारकधात्वर्थपाकविशेष्यकबोधस्यासम्भ-वेऽपि प्रतियोगित्वसम्बन्धेन नश्धात्वर्थनाशप्रकारकघटविशेष्यकबो-धस्योक्तकार्यकारणभावानाक्रान्ततयोत्पत्तौ बाधकाभाव इत्यर्थः। प्रति-

बोधः प्रकृतेऽनपाय एवेति चेत्, न—चैत्रः पाक इत्यादौ कर्तृत्वादिसंसर्गेण पाकादेश्चैत्रादावन्वयावबोधाय धात्वर्थ-प्रकारकबोधेऽपि निपात-प्रत्ययान्यतरजन्योपस्थितेर्हेतुत्वा-ऽवान्तरकल्पनाया आवश्यकत्वात्। स्यादेतत्, अत्र नश्धातोर्नाशवति लक्षणयाऽभेदेनैवास्तु प्रातिपदिकार्थेन सममन्वयः। न च धात्वर्थस्याख्यातार्थ एवान्वयनियमात् कथमेवमिति वाच्यम्, शक्त्यैव धात्वर्थप्रकारकबोधे आख्यातादिजन्योपस्थितेर्हेतुत्वात्, अत एव जानातीत्यादौ ज्ञाधातोर्ज्ञानवति लक्षणया प्रातिपदिकार्थेनान्वयसम्भवे

---

क्षिपति-नेति-चैत्रः पाक इत्यादौ कर्तृत्वसम्बन्धेन पाकप्रकारकचैत्र-विशेष्यकान्वयबोधापत्तिवारणाय विशेष्यतासम्बन्धेन भेदसम्बन्धाव-च्छिन्नधात्वर्थनिष्ठप्रकारताकशाब्दबोधं प्रति विशेष्यतासम्बन्धेन निपात-प्रत्ययजन्योपस्थितेः कारणत्वमित्येवं कार्यकारणभावान्तरकल्पनस्या-वश्यकत्वेन प्रतियोगितासम्बन्धेनातीतनाशप्रकारकघटविशेष्यक-बोधस्य नष्टो घट इति वाक्यतोऽसम्भवादित्यर्थः। प्रकृते-स्यादेत-दिति-इतोऽक्तं पचतीत्यत्राभेदसम्बन्धेन नामार्थे धात्वर्थयोरन्वयबोधस्य स्वीकृतत्वेन प्रकृतेऽपि नश्धातोः प्रतियोगितासम्बन्धेन नाशवति लक्षणातो नाशविशिष्टरूपार्थस्याभेदसम्बन्धेन घटरूपार्थेऽन्वयबोधस्य सम्भव इत्यर्थः। 'न च' इत्यस्य 'वाच्यम्' इत्यनेनान्वयः। कथमेव कथं धात्वर्थस्य नाशवतोऽभेदसम्बन्धेन घटरूपनामार्थेऽन्वयः। शक्त्या धातुजन्योपस्थितिविषयप्रकारकशाब्दबोधे समानविशेष्य-तयाऽऽख्यातादिपदजन्योपस्थितेः कारणत्वमित्येव कार्यकारणभावः, लक्षणया धातुजन्योपस्थितिविषयप्रकारकशाब्दबोधस्य निरुक्तकार्य-तावच्छेदकधर्मानाक्रान्तत्वादुक्तकारणाभावेऽपि तत्सम्भवादिति निषेधे हेतुमुपदर्शयति-शक्त्यैवेति। अत एवेति-लाक्षणिकधात्वर्थप्रकारक-

आख्यातार्थोऽयोग्यत्वान्न भासत इति चिन्तामणिकृतोक्तं युक्तम्, अन्यथा निरूपितत्वसंसर्गेण ज्ञानप्रकारकाश्रयत्वविशेष्यकावान्तरशाब्दबोधतद्धेतुत्वादिकल्पने गौरवात्। न च सामान्यतो हेतुत्वं क्लृप्तमेवेति क्व गौरवमिति वाच्यम्, तथापि तत्तदाकाङ्क्षाज्ञानादिहेतुताकल्पने गौरवादिति, मैवम्-तथा सति जानातीत्याख्यातार्थसङ्ख्यान्वयप्रसङ्गात्, भावनान्वयिन्येवाख्यातार्थसंख्यान्वयात्।

---

नामार्थविशेष्यकशाब्दबोधस्याभ्युपगमादेवेत्यर्थः। अन्यथा जानातीत्यादौ धात्वर्थप्रकारकनामार्थविशेष्यकशाब्दबोधस्यानभ्युपगमे। निरूपितत्वेति-तत्राख्यातस्याश्रयत्वे निरूढलक्षणामभ्युपगम्य तत्र धात्वर्थस्य ज्ञानस्य निरूपितत्वसम्बन्धेनान्वयः तस्य च स्वरूपसम्बन्धेन नामार्थे चैत्रादावन्वय इति निरूपितत्वसम्बन्धेन ज्ञानप्रकारकाश्रयत्वविशेष्यकशाब्दबोधे जानातीत्यानुपूर्वीविशेषरूपाकाङ्क्षाज्ञानस्य कारणत्वस्य स्वीकर्तव्यत्वेन गौरवादित्यर्थः। 'न च' इत्यस्य 'वाच्यम्' इत्यनेनान्वयः। अन्यत्र धात्वर्थप्रकारकप्रत्ययार्थविशेष्यकशाब्दबोधस्योत्पत्त्या धातुप्रत्ययसमभिव्याहारस्य सामान्यतः कारणत्वं क्लृप्तमेवेति न गौरवमित्यर्थः। निषेधे हेतुमाह-तथापीति सामान्यतो हेतुत्वस्य क्लृप्तत्वेऽपीत्यर्थः। उक्ताशङ्काया समाधानमाह-मैवमिति। तथा सति धात्वर्थस्यैव ज्ञानस्याऽभेदेन प्रातिपदिकार्थेऽन्वयाऽभ्युपगमे। आख्यातार्थेति-एकवचनलट्प्रत्ययार्थस्यैकत्वस्य चैत्रादिप्रातिपदिकार्थेऽन्वयप्रसङ्गात्। कुतोऽनन्वयप्रसङ्ग इत्यपेक्षायामाह-भावनेति-आख्यातार्थस्य कृत्यादेर्यत्रान्वयस्तत्रैवाख्यातार्थसङ्ख्याया अन्वयात् प्रकृते च सङ्ख्यातिरिक्तस्याख्यातार्थकृत्यादेरनभ्युपगमेन तदन्वयाभावात् सङ्ख्यान्वयासम्भवादित्यर्थः। प्रथमान्तपदोपस्थाप्य एव यत्र तत्राख्यातार्थसङ्ख्यान्वय इत्येव स्वीक्रियत इति भावना प्रथमान्तेऽप्याख्यातार्थसङ्ख्यान्वय

अथाख्यातार्थसङ्ख्यान्वये भावनाविशेष्यत्वं न तन्त्रम्, किन्तु प्रथमान्तपदोपस्थाप्यत्वमेवेति न दोष इति चेत्, न—धात्वर्थप्रकारकबोधसामान्य एवाख्यातादिजन्योपस्थिते-र्हेतुत्वावच्छेदकत्वेतिप्रवेशे गौरवात्, प्रजयतीत्यादावनन्वय-प्रसङ्गाच्च। पाकोऽयमित्यादौ तु 'स्तोकं पचति', 'स्तोकः पाक' इति प्रयोगयोर्विशेषाय घञादीनां धात्वर्थतावच्छे-दकविशिष्टे शक्तिस्वीकारान्न दोष इति दिक्।

---

स्यादित्याशङ्कते—अथेति। न तन्त्रं न प्रयोजकम्। लाक्षणिकधात्वर्थस्य प्रातिपदिकार्थेऽभेदसम्बन्धेनान्वयाभ्युपगमे शक्त्या धातूपस्थाप्यार्थ-प्रकारकशाब्दबोधे समानविशेष्यतयाऽऽख्यातादिजन्योपस्थितेः कार-णत्वं वाच्यमिति कार्यतावच्छेदककोटौ शक्त्येत्यधिकस्य निवेशाद् गौरवं स्यादतः शक्त्येत्यनिवेशेनैवोक्तकार्यकारणभावो वाच्य इति न लाक्षणिकस्यापि धात्वर्थस्य नामार्थेऽन्वयसम्भव इति समाधत्ते—नेति। प्रजयतीत्यादौ धातुवाच्यार्थ एव प्रशब्दार्थस्य प्रकृष्टस्यान्वयो लाक्षणि-कार्थे तद्वति तदन्वयाभावादेकदेशान्वयाभावाच्चेत्याह—प्रजयतीति। ननु धात्वर्थप्रकारकबोधसामान्य एवाख्यातादिजन्योपस्थितेः कारणत्वा-भ्युपगमे पाकोऽयमित्यादावपि दमर्थ पचधात्वर्थस्य पाकस्यान्वयोऽपि न भवेदित्याह—पाकोऽयमित्यादाविति—स्तोकपदार्थस्य स्तोकं पचतीत्यादौ धात्वर्थविशेषणत्वात् क्रियाविशेषणानां कर्मत्वातिदेशात् स्तोकपदस्य द्वितीयान्तत्वम्, स्तोकः पाक इत्यादौ च न धात्वर्थविशेषणत्वं स्तोकस्य, किन्तु पचधातूत्तरघञ एव पाकत्वावच्छिन्ने शक्तिस्वी-कारेण घञर्थ एव स्तोकस्यान्वय इति न द्वितीयान्तता, किन्तु घञन्तस्य विशेष्यवाचकपदस्य प्रथमान्तत्वात् तस्यापि प्रथमान्तत्व-मेव, एवं पाकोऽयमित्यत्रापि न धात्वर्थस्येदमर्थेऽन्वयः, किन्तु घञर्थस्यैव पाकत्वावच्छिन्नस्य तत्रान्वय इति धात्वर्थप्रकारकबोध-सामान्य एव प्रत्ययजन्योपस्थितेः कारणत्वेऽपि न काचिदनुपपत्तिः,

अथ ज्ञातो घट इत्यत्र विषयस्येव नष्टो घट इत्यत्र प्रतियोगिनोऽपि प्रत्ययविशेषार्थत्वान्नान्वयानुपपत्तिरिति चेत्? तथापि नाशोत्पत्तिकालेऽपि निष्ठार्थाविरोधात् क्रियमाणं कृतमित्यन्वयोपपत्तेः, पक्व इत्यादाविव सर्वत्र कालवृत्तिताविशेषरूपसिद्धत्वस्य निष्ठार्थत्वात्, तस्य चाद्यसमयावच्छेदेन साध्यत्वेन सममविरोधात्, सिद्धत्वविशिष्टसाध्यताया वर्तमानार्थत्वात्, "प्रारब्धोऽपरिसमाप्तश्च वर्तमानः" इति हि वैयाकरणाः, चिरनष्टे इदानीं नष्ट इति, चिरोत्पन्ने चेदानीमुत्पन्न इति च प्रतीतिः समभिव्याहारविशेषादेतत्कालावच्छिन्नसाध्यत्वविशिष्टसिद्ध-

एवं च जानातीत्यादौ धात्वर्थस्य लाक्षणिकस्यापि न नामार्थेऽन्वयसम्भव इति प्रत्ययार्थमाश्रयत्वमन्तरा कृत्वैव तदन्वय इति नष्टो घट इत्यादौ नश्यतेर्नाशवति लक्षणामभ्युपेत्य तस्याभेदेन घटेऽन्वय इति न सम्भवतीत्यर्थः। शङ्कते-अथेति-यथा ज्ञातो घट इत्यत्र ज्ञानविषयाभिन्नो घट इत्यन्वयबोधस्तथा नष्टो घट इत्यत्र नाशप्रतियोग्यभिन्नो घट इत्यन्वयबोधः सम्भवतीत्यर्थः। एवं सति निष्ठार्थः प्रतियोगित्वं नाशोत्पत्तिकालेऽपि नाशप्रतियोगिनि घटे वर्तत इति तदानीमपि नष्टो घट इति स्यादेव, तद्दृष्टान्तबलादेव च क्रियमाणं कृतमित्यपि युज्यते एव कालवृत्तिताविशेषरूपस्य सिद्धत्वस्य क्रियमाणेऽपि भावात्। पक्व इत्यादौ यथा कालवृत्तिताविशेषरूपमेव सिद्धत्वं निष्ठार्थस्तथा सर्वत्राऽपीत्याह-पक्व इत्यादाविवेति। तस्य च निरुक्तसिद्धत्वस्य च। सिद्धत्वविशिष्टसाध्यत्वस्य वर्तमानत्वरूपत्वे वैयाकरणानां सम्मतिमाह-प्रारब्ध इति। समभिव्याहारविशेषात् इदानींपद नष्टपदयोरिदानींपदोत्पन्नपदयोश्च पूर्वापरीभावलक्षणाऽऽकाङ्क्षाविशेषात्। क्रियमाणस्य किञ्चिदंशेन सिद्धत्वं किञ्चिदंशेन साध्यत्वमिति सिद्धांशोपादानेन कृतमिति साध्यांशोपादानेन क्रियमाणमिति भवति क्रियमाणं

त्वोपस्थित्यैव न भवति। इत्थमेव क्रियमाणं कृतमेव, कृतं च क्रियमाणत्वेन भजनीयमितिसिद्धान्तः सङ्गच्छते, सिद्धत्वविशिष्टसाध्यतायाः सिद्धत्वनियतत्वात्, शुद्धसिद्धतायाश्च विशिष्टसाध्यताऽनियतत्वात्। अस्तु वा विपरिणामस्वरूपनिष्पत्त्यादिरूपाऽननुगतैव निष्ठा, समभिव्याहारविशेषादेव बोधविशेषोपपत्तेः, परमुक्तयुक्त्या क्रियाकालो निष्ठाकालं न विरुणद्धीति गम्भीरनयमतं कियदिह विविच्यते? इति, सत्यम्-निश्चयत इत्थमेव

कृतमिति, यच्च पूर्वमेव कृतं तत्र सिद्धत्वमेव न तु साध्यत्वमिति तथाविधकृतस्य न क्रियमाणत्वम्, यच्चेदानीमेव किञ्चिदंशेन निष्पन्न किञ्चिदंशेन साध्यते तत् कृतं क्रियमाणमपीति स्याद्वाद एव तत्र प्रगल्भत इत्याशयेनाह इत्थमेवेति। विशिष्टसद्भावे विशेषणसद्भावोऽवश्यंभावीति सिद्धत्वविशिष्टसाध्यता यत्र तत्रावश्यमेव सिद्धत्वम्,

" किञ्चित् सिद्धमसिद्धं वा साध्यत्वेनाभिधीयते।
आश्रितक्रमरूपत्वात् सा क्रियेत्यभिधीयते ॥१॥

इति वचनाद् वर्तमानक्रियाकाले सिद्धत्वविशिष्टसाध्यतावति सिद्धत्वस्यावश्यंभावात् क्रियमाणं कृतमित्याशयेनाह-सिद्धत्वविशिष्टेति। सामान्यत सिद्धत्वं च यत् सर्वथा निष्पन्नं यच्च किञ्चिदंशेन निष्पन्नं किञ्चिदंशेन च साध्यते तदुभयत्र समस्तीति तत्र यत् सर्वथा निष्पन्नं तत्र कृतत्वमेव न क्रियमाणत्वम्, अन्यत्र तु कृतत्वमपि क्रियमाणत्वमपीति कृतस्य क्रियमाणत्वे भजनेत्याशयेनाह-शुद्धसिद्धताया इति। क्वचिद् विपरिणाम एव निष्ठाप्रत्ययार्थः क्वचिच्च स्वरूपनिष्पत्तिरित्येवमननुगतत्वेऽपि समभिव्याहारविशेषात् कस्यचित् कुत्रचित् प्रतीत्युपपत्तिरेवमपि क्रियाकालनिष्ठाकालयोरविरोधात् क्रियमाणं कृतमित्युपपद्यत इत्याशङ्कितां स्वाभिप्रेतमुपसंहरति-अस्तु वेत्यादिना। समाधत्ते-सत्यमिति। निश्चयत निश्चयनयत.। इत्थमेव

तत्त्वव्यवस्थायामपि व्यवहारतोऽकुर्वतोऽपि नियतपूर्ववर्तिनः कारणत्वाभ्युपगमात्, अन्यथा पूर्वं कुर्वद्रूपत्वानिश्चये प्रवृत्त्यनुपपत्तिप्रसङ्गात्। किञ्च, इदं कुर्वद्रूपत्वमपि सहकारिसम्पत्तावेव नान्यथेत्यवस्थितकारणादेव सहकारिचक्रानुप्रवेशात् कार्योपपत्तौ किं कुर्वदकुर्वतोर्भेदाभ्युपगमकष्टेन?। न चोपादानोपादेयभावनियतैः क्षणैरेव कुर्व-

---

क्रियमाणं कृतमेव, निश्चयतस्त्वित्थमेव तत्त्वव्यवस्थायामपीत्यस्य व्याख्यानम्। निश्चयनयतश्चरमकारणमेव कुर्वद्रूपत्वात् क्रियत्त्वाभिमतं कारणमित्यस्य युक्तत्वेऽपि व्यवहारतो नैतद् युक्तमित्याह-व्यवहारत इति। अकुर्वतः तदानीमकुर्वतः। अन्यथा कुर्वद्रूपत्वेनैव कारणत्वाभ्युपगमे। पूर्वं कार्योत्पत्तेः प्राक्। प्रवृत्त्यनुपपत्तिप्रसङ्गात् तत्तत्प्रतिनियतकार्योत्पादनार्थं तत्तत्कारणसंघटनगोचरप्रवृत्त्यनुपपत्तिप्रसङ्गात्, इष्टसाधनतानिश्चयस्य प्रवर्तकत्वात् कुर्वद्रूपत्वात्मककारणतावच्छेदकनिश्चयाभावे इष्टसाधनतानिश्चयस्यैवाभावादित्यभिसन्धिः। किञ्च, कुर्वद्रूपत्वमेव नास्ति कुतस्तद्रूपेण चरमकारणस्य कारणत्वसम्भव इत्याह-किञ्चेति। इदं कारणतावच्छेदकतया निश्चयनयसम्मतम्। सहकारिसम्पत्तावेव यावत्सहकारिसमवधाने सत्येव कारणे भवति। नान्यथा सहकारिसम्पत्त्यसत्त्यां कुर्वद्रूपत्वं न भवति, एवं च कुर्वद्रूपत्वं किमिति प्रकल्प्यं? सकलसहकारिसमवहितात् स्थिरकारणादेव कार्योत्पत्तिसम्भवे सहकार्यसमवहितं कुशूलस्थबीजमकुर्वद्रूपमन्यत्, अन्यच्च सकलसहकारिसमवहितं कुर्वद्रूपं बीजमित्येवं कुर्वद्रूपाकुर्वद्रूपभेदाभ्युपगमेनालमित्याह-इत्यवस्थितकारणादेवेति। ननु पूर्वपूर्वकारणादुपादानरूपाज्जायमानमुपादेयस्वरूपं तत्तत्कार्यकुर्वद्रूपात्मकमेवोपजायत इत्येतावतैव कुर्वद्रूपत्वनियमनं भविष्यतीति न तत्र सहकारिचक्रनियम्यत्वमुपेयत इत्याशङ्क्य प्रतिक्षिपति-न चेति-अस्य 'वाच्यम्' इत्यनेन सम्बन्धः। एतन्मते उपादेयकाले उपादानसत्ता

द्रूपत्वं नियम्यत इति वाच्यम्, क्षणत्वेन सर्वेषामविशेषादेकस्वभावस्य कुतोऽपि विशेषायोगात्। किञ्च, एवं कार्येण कारणानुमानोच्छेदः, सामान्यतः कारणताग्रहाभावात्। न च सादृश्येन तथाग्रहाददोषः ? पूर्वापराननुसन्धानेन क्षणिकपक्षे सादृश्यस्यैव ग्रहीतुमशक्यत्वादित्यादिकं व्युत्पादितमनेकान्तजयपताकादौ पूर्वसूरिभिः। अत एव कि-

क्षेप्यते किन्तु पूर्ववर्त्तित्वमेव कारणत्वमुपादानस्य, तच्चान्यकारणानामपि समानमेवेति इदमुपादानमिदं च सहकारीति नियम एव क्षणिकवादिमते न सम्भवतीति पूर्ववर्तित्वस्याभाव. सर्वेषां क्षणानामेक एव, स्वभावान्तरं चोपदर्शयितुमशक्यमेवेति नोक्तदिशा कुर्वद्रूपत्वनियमसम्भव इति निषेधहेतुमुपदर्शयति-क्षणत्वेनेति। किञ्च निश्चयनये वह्नित्वेन धूमत्वेन न कार्यकारणभावः किन्तु धूमं प्रति धूमकुर्वद्रूपत्वेनैव कारणत्वमिति धूमात्मककार्येण वह्न्यात्मककारणानुमानं न स्यादित्याह-किञ्चेति। एवं कुर्वद्रूपत्वेन कारणत्वाभ्युपगमे। कार्येण धूमत्वेन धूमलक्षणकार्येण। कारणानुमानोच्छेदः वह्नित्वेन वह्निरूपकारणानुमानोच्छेदः। सामान्यतः वह्नित्व धूमत्वादिना। ननु धूमं प्रति धूमकुर्वद्रूपात्मकवह्नेरेव यद्यपि कारणत्वं तथापि तोयसादृश्यादकुर्वद्रूपस्यापि वह्नेः कारणत्वग्रहात् तेन तदनुमाने भविष्यतीत्याशङ्कां प्रतिक्षिपति-न चेति। तथाग्रहाद् कारणताग्रहात्। अदोष इति-कार्येण कारणानुमानस्योच्छेदो नेत्यर्थः। पूर्वपूर्ववह्निना सममुत्तरोत्तरवह्नेः सादृश्यग्रह एव क्षणिकपक्षे न सम्भवति, पूर्ववह्निग्रहकाले उत्तरवह्नेरग्रहादुत्तरवह्निग्रहकाले पूर्ववह्नेरग्रहात् प्रतियोग्यनुयोगिनोरग्रहे सादृश्यग्रहासम्भवादित्याह-पूर्वापराननुसन्धानेनेति। एतद्विशेषजिज्ञासुभिरनेकान्तजयपताकादिकमवलोकनीयम्, विस्तरभयान्नेह तत्प्र-

पञ्चः नियत इत्याशयेनाह-इत्यादिकमिति। अत एव कुर्वद्रूपत्वेन कार-

यमाणमेतन्नये न कृतम्, कारणचक्रसम्पत्त्युत्तरमेव कार्यसिद्धेः, अन्यथा समसमयभावित्वे कार्यकारणभावव्यवस्थाऽयोगात्, उपादानोपादेयभावस्यापि परस्परोपमर्दनियतस्य क्षणभेदनियतत्वात्। न च वर्तमानत्वमतीतत्वं चैकत्र व्यवहारसिद्धम्, न चानीदृशोऽर्थे प्रमाणावतारः, न च यत्किञ्चिद्व्यवहारदर्शनात् सर्वत्र तदनाश्वासो न्याय्य इत्यादिकं व्यवहारनिश्चययोर्मिथो विवादमवलोक्य वस्तुस्थितिर-

---

पत्त्यनभ्युपगमादेव। एतन्नये व्यवहारनये। अन्यथा कारणचक्रसम्पत्त्युत्तर कार्यमित्यस्यानभ्युपगमे। समसमयभावित्वे कार्यकारणयोः समानसमयभावे। पूर्ववर्ति कारणमुत्तरकालवर्ति कार्यमित्येवमपरापरीभावे स्याद् व्यवस्था, समसमयत्वे तु द्वयोः समसमयत्वाविशेषात् कारणत्वेनाभिमतमपि कार्यं कार्यत्वेनाभिमतमपि कारणं किं न स्यात्? विशेषान्तराभावात् समसमयभाविनोः सव्येतरगोविषाणयोरिव वा कार्यकारणभाव एव न भवेदित्याह–कार्यकारणभावव्यवस्थाऽयोगादिति। ननु यदुपादानं तत् कारणं यदुपादेयं तत् कार्यमित्येवं समसमयत्वेऽपि व्यवस्था भवेदित्यत आह–उपादानोपादेयभावस्यापीति–यदुपमृद्य यद् भवति तदुपादेयमुपमर्दकमुपादानं चोपमर्द्यमित्ययं क्षणभेदे सत्येव भवितुमर्हति नैकक्षणवृत्तित्वे इत्याशयः। वर्तमानत्वे सति भवति क्रियमाणत्वमतीतत्वे सति भवति कृतत्वम्, तयोश्च विरोधान्नैकत्र व्यवहारतः प्रसिद्धिरित्याह–न चेति। यत्र व्यवह्रियते तत्रैव प्रमाणप्रवृत्तिः, अव्यवह्रियमाणे च प्रमाणमपि न प्रवर्तते, क्रियमाणस्य कृतत्वे व्यवहृतिनये प्रमाणमपि नास्तीत्याह–न चानीदृशेऽर्थ इति। नन्वेकस्य कस्यचिद् व्यवहाराभावेऽप्यन्यस्य व्यवहारः क्वचिद् दृश्यते, तथा यत्रापि व्यवहारो न दृश्यते तत्राऽपि व्यवहारः कस्यचित् कदाचिद् भविष्यतीति सम्भावनयाऽनाश्वास इत्यत आह–न चेति। 'अन्वेषणीय' इत्यनेनान्वेषणे सम्यक् क्रियमाणे स्याद्वाद-

न्वेषणीया। फलं पुनर्विचित्रनयवादानां जिनप्रवचनविषय-रुचिसम्पादनद्वारा रागद्वेषविलय एव। अत एवायं [श्रीभद्रबाहु]भगवदुपदेशोऽपि [आवश्यकनिर्युक्तौ]—

"सव्वेसिं पि णयाणं बहुविहवत्तव्वयं णिसामित्ता।
तं सव्वणयविसुद्धं जं चरणगुणट्ठिओ साहू" ॥१०५५॥

["सर्वेषामपि मूलनयानाम्, अपिशब्दात् तद्भेदानां च, नयानां द्रव्यास्तिकादीनाम्, बहुविधवक्तव्यतां सामान्यमेव, विशेषा एव, उभयमेव वाऽनपेक्षमित्यादिरूपाम्, अथवा नामादीनां नयानां कः कं साधुमिच्छतीत्यादिरूपाम्, निशम्य श्रुत्वा, तत् सर्वनयविशुद्धं सर्वनयसम्मतं वचनम्,

प्रमाणराजहंसमार्गे एव वस्तुसिद्धिनिर्णयश्चेति सूचितम् । यदि स्याद्वादेन एव वस्तुस्थितिस्तर्हि विचित्रनयवादविचारोऽनारम्भणीय एव परीक्षकाणां फलाभावादित्यत आह–फलं पुनरि–ति–यत् किमपि वचनं श्रीमज्जिनप्रवचनविषयः, तस्य परस्परविरोधप्रतिभासे तद्विषये रुचिरपि दोलायमानैव स्यात्, एवं सति कस्यचित् क्वचिद्विषयेऽभिनिवेशादिष्टसाधनताप्रतिसन्धानतो रागः क्वचिच्च द्विष्टसाधनताप्रतिसन्धानतो द्वेषश्च समुदियात्, विचित्रनयवादे तु विचारितेऽयमर्थोऽनेन नयेन घटतेऽयं चानेनेति जिनप्रवचनविषयाः सर्वेऽप्यर्थाः समीचीना एवेति रुचिरुपजायते ततो रागद्वेषविलयोऽपीति फलवान् विचित्रनयवादविचार इत्याशयः ।

उक्तार्थे भगवच्छ्रीमद्भद्रबाहुसंवादमुपदर्शयति–अत एवेति–जिनप्रवचनविषयरुचिसम्पादनद्वारा विचित्रनयवादानां रागद्वेषविलयलक्षणफलवत्त्वादेवेत्यर्थः । सव्वेसिं पि० इति—'सर्वेषामपि नयानां बहुविधवक्तव्यतां निशम्य । तत् सर्वनयविशुद्धं यच्चरणगुणस्थितः साधुः" ॥१॥ इति संस्कृतम्, अस्या गाथायाः हरिभद्रीया व्याख्या

यच्चरणगुणस्थितः साधुः, यस्मात् सर्वनया एव भावनिक्षेपमिच्छन्तीति गाथार्थः" इति श्रीहरिभद्रीया वृत्तिः] त्ति। चरणगुणस्थितिश्च परममाध्यस्थ्यरूपा न रागद्वेषविलयमन्तरेणेति तदर्थमवश्यं प्रयतितव्यमित्युपदेशसर्वस्वम् ॥

[ प्रशस्ति — ]

यस्यासन् गुरवोऽत्र जीतविजयप्राज्ञाः प्रकृष्टाशया
भ्राजन्ते सनया नयादिविजयप्राज्ञाश्च विद्याप्रदाः।
प्रेम्णां यस्य च सद्म पद्मविजयो जातः सुधीः सोदरः
सोऽयं न्यायविशारदः स्म तनुते काञ्चिन्नयप्रक्रियाम् ॥१॥

सर्वनयानिति। तद्भेदाना मूलनयभेदानाम्, यन्मद् व्यवन्म्? तदर्थं रागद्वेषविलयार्थम् ॥

निर्मितस्यास्य नयरहस्यप्रकरणस्योपादेयत्वव्यक्तये तत्कर्तुस्वरस्य वैशिष्ट्यं प्रकटयति यस्येति। समीचीनशिक्षणाध्यापनादिकर्तृत्वादिविशिष्टविधगुरुगुणत्वावबोधनाय गुरव इति बहुवचनम्। अत्र अस्मिन् गच्छे एतेन अन्यत्रापि न्यायादिविद्याप्रदानकुशला काश्या गुरवः येभ्यो न्यायादिविद्यामासादितवानस्मीति सूचितम्। प्राज्ञस्य विशेषणात् स्व परनयरहस्याभिज्ञत्वं तेषां ज्ञापितम्। सदाशयत्व विशेषणाच्च यथा स्वयमवगच्छन्ति तथैव हितबुद्ध्या शिष्येभ्य उपदिशन्ति न तु क्षुद्राशयपुरुषवत् प्रतारणाद्यभिप्रायेणाऽन्यथाऽवगतमर्थमन्यथोपदिशन्तीति तथा चैतादृशविशिष्टगुरुप्रसादतो ज्ञाततत्त्वस्य ममान्यातिशायिविद्यां प्रति किमु वक्तव्यमिति ध्वनितम्। जीतविजयश्च स्वगुरुनयविजयसतीर्थ्यं इति तस्मात् प्राप्तविद्यावतोऽपि मम स्वगुरुनयविजयतोऽपि विद्याप्राप्तिवैशिष्ट्यहेतुरेवेत्याशयेनाह—भ्राजन्ते

ग्रन्थे दूषणदर्शने निविशते दुर्मेधसां वासना
भावाभिज्ञतया मुदं तु दधते ये केऽपि तेभ्यो नमः ।
मन्दारद्रुमपल्लवेषु करभाः किं नो भृशं द्वेषिणो
ये चास्वादविदस्तदेकरसिकाः श्लाघ्यास्त एव क्षितौ ॥२॥

कृत्वा प्रकरणमेतत् प्रवचनभक्त्या यदर्जितं सुकृतम् ।
रागद्वेषविरहतस्ततोऽस्तु कल्याणसम्प्राप्तिः ॥३॥

कृतं च भट्टारकश्रीहीरविजयसूरिशिष्यमहोपाध्यायश्रीकल्याणविजयगणिशिष्य-पण्डितश्रीलाभविजयगणिशिष्यपण्डितश्रीजीतविजयगणिसतीर्थ्यपण्डितश्रीनय-विजयगणिशिष्यन्यायविशारद-न्यायाचार्यपण्डितश्रीयशोविजयगणिना।

**श्रीनयरहस्यप्रकरणं संपूर्णम् ॥**

। ग्रन्थाग्रम्-पादोनानि षट्शतानिश्लोकाः प्रायः ।

---

इति। स्वनयत्वविशेषणोपादानात्तोनिमद्भ्यस्तेभ्यो नयकुशलत्वं स्वस्य जातमित्यावेदितम्। स्वयं सम्पादिताऽपि विद्या स्वसदृशान्यसंवाद-मलभमाना प्रतिदिवसं क्षीणातिक्षीणैव संजायते, मम तु विशिष्ट-मतिसोदर्यैर्घनतरप्रविरलप्रवाहसंवादा सा प्रतिदिवसं प्रवर्धमानैवे-त्याशयेनाह-प्रत्यामिमि। विविधविरुदशालिनः स्वस्य निर्मितग्रन्थो-पादेयताप्रयोजकं न्यायविशारदत्वमित्याशयेन न्यायविशारद इति ॥१॥ मदुक्ताशयमविदित्वैव येऽत्रोत्तरकाले मदुक्तिं दूषयिष्यन्ति ते शास्त्ररहस्यानभिज्ञा अन्यैरेव शास्त्ररहस्याभिज्ञैः काले प्रतिबोधनीयाः, तैः प्रतिबोधिताः सन्तोऽपि यदि तत्त्वं नावगच्छेयुः किं नाम मम ग्रन्थस्य दूषणम्? सन्ति सहृदयाः केचन येषामेतद्ग्रन्थरहस्यचर्योद्यत आनन्दोल्लासः स्यादेव, तान् प्रति नमस्कृतिरस्तु मदीयेत्याशयेनाह-ग्रन्थ इति ॥ २ ॥ स्वस्यैतद्ग्रन्थकरणफलमाशंसते-कृत्वेति ॥ ३ ॥

# टीकागता मूलार्थसङ्ग्रहश्लोकाः—

याद्वादमतार्थसार्थघटनानैपुण्यभाजा सदा
नीतीनां समयानुसारिभजनाक्रान्तप्रयासस्पृशा ।
लक्ष्याणामपि लक्षणाऽननुगमभ्रान्त्यादिदोषालयैः
दुर्लक्ष्यत्वमुपागमानितदृशा दुर्नीतितोऽच्छित्तये ॥ १ ॥

सामान्येन नयस्य लक्षणमतिव्याप्त्यादिनाऽदूषितं
तत्त्वार्थोक्त्यनुशीलितं प्रथमतो ग्रन्थेऽत्र संदर्शितम् ।
नो तन्मात्रयोगिता न च तथा स्यातन्त्यमेषा सतां
मानापेक्षितया किलोभयभिदाशून्या इमा दृष्टयः ॥ २ ॥

एता विप्रतिपत्तिभावविकला दृष्टान्ततो भाविता
भेदाभेदमुखा विरोधरहिता जात्यन्तरे स्थापिताः ।
द्वौ भेदौ च नयस्य चात्र गदितौ द्रव्यार्थिकश्चादिमः
पर्यायार्थिकनामकस्तदितरो नाभ्यां विभिन्नो नयः ॥ ३ ॥

द्रव्यं केवलमभ्युपैति प्रथमः पर्यायमात्रं परः
चत्वारः प्रथमस्य वृद्धगदिता भेदास्त्रयोऽन्त्यस्य तु ।
जल्पाना भय आदिमस्य गदिताश्चत्वार इह मते
चान्यस्येति ततो नया समुदिता सप्तेति भाव्या बुधैः ॥ ४ ॥

पञ्चैवेति मतान्तरे तु कथिताः शब्दात् त्रयाणां ग्रहा-
ज्ज्ञेयौ नैगमसंग्रहौ व्यवहृतिः शुद्धर्जुसूत्रस्तथा
शब्दः सांप्रतनामकः समभिरूढाख्यो नयोऽन्यस्तथा
चैवम्भूत इतीह नीतिनिपुणैर्नयाः सप्त तत्त्वतः ॥ ५ ॥

ते शुद्धास्तु प्रदेश-प्रस्थक-वसत्युद्गीतदृष्टान्ततो
निर्णीताः क्रमतो यथाक्रममभी संलक्षिता लक्षणैः ।
नयार्थादिविचिन्तनोक्तिघटनाऽभीष्टार्थसिद्धौ कृता
निक्षेपोपगमेऽपि सन्नियमिता प्रत्येकमेषां घटा ॥ ६ ॥

आदेशान्तरवर्णनेऽपि बहुधा चर्चा प्रसङ्गाऽऽगता
तत्रापीष्टविशेषितत्त्वगतये सप्तापि भङ्गाः स्थिताः ।
एवम्भूतनयस्य तत्त्वमनने दिग्वाससां सम्मतं
संक्षेपेण निराकृतं निजमतं संक्षेपतो भावितम् ॥ ७ ॥

नीतीनां च बलाबले तु गदिते इच्छाश्रिते तत्कथा-
सम्बन्धाद् व्यवहार-निश्चयनयोल्लासोऽपि संवर्धितः ।
इत्थं न्यायविशारदेन मननं सिद्धान्ततः सूत्रितं
तत्तत्त्वावगमाय तत्र रचिता व्याख्याऽस्त्वभीष्टप्रदा ॥ ८ ॥

व्याख्या नयरहस्यस्य मन्दमोदविधायिनी ।
लावण्यसूरिणा दृब्धा गुरूणां कृपया मुदा ॥ ९ ॥

# १ परिशिष्टम्—

१५ पृष्ठे १३ पङ्क्तौ 'सफलमेव' इत्यनन्तरम्—

ननु विप्रतिपत्तिसाधकस्य अंशग्राहित्वरूपस्य द्वितीयस्य, प्रमितिवैलक्षण्यरूपस्य तृतीयस्य च हेतोरपाकरणायान्तिमोदाहरणद्वयदानं नौचितीमञ्चति, द्वितीय तृतीयान्यतरेणैवोदाहरणेन तन्निरासात्, किं मतिज्ञानादीनां प्रत्यक्षत्वं नास्ति? आहोस्वित् प्रत्यक्षादीनां मतिज्ञानादित्वं नास्ति? येनान्तिमोदाहरणद्वयप्रदानमावश्यकं दर्शितेति चेत्, न—प्रत्यक्षानुमित्यादीनां मतिज्ञानत्वमविशिष्टमिति न मतिज्ञानत्वमुपादाय प्रमितिवैलक्षण्यम्, किन्तु प्रत्यक्षत्वानुमितित्वादिकमुपादायैव, तथा चक्षुरेवार्थं घटादिरूपं कथञ्चिद्रूप रस गन्ध स्पर्शात्मकं चाक्षुषप्रत्यक्षं रूपमेव गृह्णाति, स्पार्शनप्रत्यक्षं स्पर्शमेव विषयीकरोति, रासनप्रत्यक्षं रसमेवावगाहते, घ्राणजप्रत्यक्षं गन्धविषयकमेव भवतीत्येवं प्रत्यक्षत्वावान्तरचाक्षुषत्वादिधर्मरूपलक्षणप्रमितिवैलक्षण्यं प्रतिनियतविषयविभागकलितं प्रत्यक्षत्वमुपादायैव, यद्यपि मतिज्ञान श्रुतज्ञाने वस्तुतः परोक्षे, अवधि-मन पर्यवज्ञाने विकलप्रत्यक्षे, केवलं च सकलप्रत्यक्षमित्येवमवध्यादित्रिकमेव पारमार्थिकप्रत्यक्षम्, तथापि सांव्यवहारिकप्रत्यक्षत्व मतिज्ञानस्याप्यनुमतम्, किन्त्वनुमित्यादिपरोक्षज्ञानरूपमपि तद् इति प्रत्यक्षत्वानुमितित्वादिप्रमितिवैलक्षण्यं प्रमितिभेदनिबन्धनं विरुद्धधर्मतया न मतिज्ञानस्य, तत्र प्रत्यक्षत्वानुमितित्वादेः सत्त्वात्, न चैकत्रार्थे प्रतिनियतविषयविभागो मतिज्ञानत्वलक्षणप्रमितिवैलक्षण्यनिबन्धनः, किन्तु प्रत्यक्षत्वावान्तरचाक्षुषत्वादिलक्षणप्रमितिवैलक्षण्यनिबन्धन एव, चाक्षुषत्वादिकं न मतिज्ञानत्वस्य साक्षाद् व्याप्यम्, किन्तु मतिज्ञानत्वव्याप्येन्द्रियजत्वानिन्द्रियजत्वादिव्याप्यम्, प्रतिनियतविषयविभागशालित्वमेव प्रत्यक्षादीनां प्रमितिवैलक्षण्योपोद्बलकं विशेषणं प्रागुपन्यस्तम्, तच्च चाक्षुषत्वादिकमुपादायैव निर्वहति, चाक्षुषत्वादिकं च प्रत्यक्षत्वस्यै-

धर्मान्तरसामान्यम्, एवं च मतिज्ञानस्य प्रत्यक्षत्वं परोक्षत्वं च, प्रत्यक्षादीनां मतिज्ञानत्वादिकमपि, परमुक्तार्थगतिः प्रत्यक्षत्वादिना प्रत्यक्षादीनामुपादानार्थत्वेनेत्येतदर्थमन्तिमोदाहरणद्वयोपादानम् ॥

३४ पृष्ठे, २४ पङ्क्तौ 'उक्तमत्र निवृत्ति' इत्यनन्तरं त्रुटितटीकांशः—

'अनुयोगांशमादाय' इति स्थाने 'अनुपयोगांशमादाय' इति पाठो युक्तः "अनुपयोगो द्रव्यम्, उपयोगस्तु भावः" इति परमर्षिप्रसिद्धिमाश्रित्य यदा वर्तमानावश्यकपर्यायोऽपि प्रमाता तत्र नोपयुक्तस्तदाऽनुपयुक्ते वर्तमानावश्यकपर्याये द्रव्यपदोपचारादुपचरितद्रव्यस्वरूपवर्तमानावश्यकपर्यायमिच्छति ऋजुसूत्र इत्येवमर्थकरणेन नियुक्तत्वमुपपद्यते, तस्य तुल्यांश-ध्रुवांशात्मकद्रव्याभ्युपगमाभावेऽपीत्यर्थः।

४० पृष्ठे २२ पङ्क्तौ 'ऋजुसूत्रस्येति भावः' इत्यनन्तरम्—

प्रत्येकधर्मपदेन सामान्यविश्रामपक्षे कस्य, विशेषविश्रामपक्षे च कस्य ग्रहणमित्यत्रार्थं विवेकः—सामान्यविश्रामपक्षे प्रदेशपदेन धर्मास्तिकायादीनां पञ्चानां प्रत्येकं यावन्तः प्रदेशास्ते सर्वेऽपि समुपस्थिताः, तेषु धर्मास्तिकायप्रदेशत्वलक्षणो यः प्रत्येकधर्मस्तत्प्रकारकबुद्धिविषयत्वं नास्ति, धर्मास्तिकायप्रदेशे धर्मास्तिकायप्रदेशत्वप्रकारकबुद्धिविषयत्वस्य सत्त्वेऽपि अधर्मास्तिकायप्रदेशे तस्याभावात्, एवमधर्मास्तिकायप्रदेशत्वलक्षणो यः प्रत्येकधर्मस्तत्प्रकारकबुद्धिविषयत्वस्याधर्मास्तिकायप्रदेशे भावेऽपि धर्मास्तिकायप्रदेशेऽभावात्, एवमाकाशास्तिकायप्रदेशत्वादेरपि प्रत्येकधर्मपदेन ग्रहणेऽनन्वयो बोध्यः, तथा च सामान्यविश्रामपक्षे प्रत्येकधर्मपदेन धर्मास्तिकायप्रदेशत्वादेरग्रहणम्। विशेषविश्रामपक्षे प्रदेशपदेन धर्मास्तिकायप्रदेशस्य ग्रहणे प्रत्येकधर्मपदेन धर्मास्तिकायप्रदेशत्वस्य ग्रहणम्, एवं प्रदेशपदेनाधर्मास्तिकायप्रदेशग्रहणे प्रत्येकधर्मपदेनाधर्मास्तिकायप्रदेशत्वस्य ग्रहणम्, एवमाकाशप्रदेशत्वादेर्ग्रहणं बोध्यम् ॥

**४८ पृष्ठे चतुर्थपङ्क्तितो मुद्रितस्य सुखावबोधाय विस्तरः**

मू० शब्द-समभिरूढैवम्भूतास्तु–प्रस्थकाधिकारज्ञगतात् प्रस्थककर्तृगताद् वा प्रस्थकोपयोगादतिरिक्तं प्रस्थकं नः सहन्ते, निश्चयमानात्मकप्रस्थकस्य जडवृत्तित्वायोगात्, बाह्यप्रस्थकस्याप्यनुपलम्भकालेऽसत्त्वेनोपयोगानतिरेकाश्रयणाद् अन्ततो ज्ञानाऽद्वैतनयानुप्रवेशाद् वा। न च ज्ञानाऽज्ञानात्मकत्वोभयनयविषयसमावेशविरोधात् प्रत्येकमनयत्वमाशङ्कनीयम्, तादात्म्येनोभयरूपाऽसमावेशेऽपि विषयत्व-तादात्म्याभ्यां तदुभयसमावेशात्। विषयत्वमपि कथञ्चित्तादात्म्यमिति तु नयान्तराकूतम्, यदाश्रयणेन 'अर्थाऽभिधान-प्रत्ययानां तुल्यार्थत्वम्' उक्तमिति दिक्॥

नयाणां शब्दनयानां प्रस्थकविषये समानाभिप्रायाणां वक्तव्यमुपदर्शयति–शब्द-समभिरूढैवम्भूतास्त्विति–अस्य 'न सहन्ते' इत्यनेनान्वयः। प्रस्थकपरिमितमपि भूमौ न्यस्तं कुशूलादिगतं वा धान्यम् 'एतत् प्रस्थकप्रमितम्' इति यावन्नाऽवगतं तावत् प्रस्थकस्तत्र भवति प्रमाणाभावात्, एवं प्रस्थक एव धान्यादिमापकः सन्नपि बाह्यो यावन्मापनव्यापृत्या निश्चीयते–'अयं प्रस्थकः' इति तावत् प्रमाणाभावाद् स प्रस्थको न भवति, तथा च प्रस्थकाकारज्ञानमेव प्रस्थकस्वरूपतन्मेयनिर्णायकत्वात् प्रस्थक इति, तच्च प्रस्थकाकारज्ञानं प्रस्थकाधिकारज्ञगतं प्रस्थककर्तृगतं वा भवितुमर्हति, तत्र 'अयं प्रस्थकप्रमितं धान्यादिकमिच्छति, धान्यादिकं मातुं वा प्रस्थकमिच्छति' इतीच्छाविशेषलक्षणमधिकारिपुरुषगतं प्रस्थकाधिकारं यो जानाति प्र

प्रस्थकाधिकारकः, स प्रस्थकोपयोगतो वाणिज्यं प्रस्थकनिमित्तं क्रय-विक्रयादिलक्षणं विधातुं प्रगल्भत इति तत्पुरुषविशेषगतं प्रस्थकाकारज्ञानं प्रस्थकनिश्चयमानात्मकत्वात् प्रस्थक इति; यश्च काष्ठवृत्तिकाद्युपादानकाऽऽकारविशेषात्मकप्रस्थककर्ता पुरुषः स निर्माणसमयात् पूर्वमेव बुद्धौ 'इदमित्थं भवितुमर्हति' इत्याकलय्य निर्मिमीते प्रस्थकमिति तद्गतं यत् प्रस्थकज्ञानं तदपि मेयमानस्वरूपप्रस्थकनिश्चयमानात्मकत्वात् प्रस्थकः, तद्व्यतिरिक्तं तु निश्चयमानाऽनात्मकत्वान्न प्रस्थक इत्याह-प्रस्थकाधिकारकगतमिति । अयमभिप्रायः-मानविशेषनिर्णयप्रयोजनक एव प्रस्थकः, मानविशेषनिर्णयश्च न स्वरूपसतो बाह्यप्रस्थकात्, तथा सति प्रस्थकैकद्व्यादिपरिमितधान्यविशेषक्रयविक्रयार्थं वाणिज्यार्थीमुपगतः पुमान् तद्व्यवस्थितबाह्यप्रस्थकादेव प्रस्थकाधिकारकवचनमन्तरेणैव 'प्रस्थकप्रमितमिदं धान्यम्, अयं वा प्रस्थकः' इत्यवधारयेत्, तथावधारणतश्च क्रयविक्रयादिव्यवहारमपि निःसंदिग्धं प्रवर्तयेत्, न चैवम्, किन्तु प्रस्थकाधिकारकवचनादेव 'इदं प्रस्थकमितं धान्यम्, एष मापकः प्रस्थकः, एतन्मितं च प्रस्थकः' इत्याकारात् प्रस्थकादिमापक-मेयादिकमवधारयति व्यवहारविशेषं च प्रवर्तयति, एवञ्च तस्य तत्र न साक्षादेव प्रमाणं जडस्वरूपस्य तस्य निश्चयप्रमाणात्मत्वाभावात्, किन्तु स्वोल्लिखितं यत् प्रस्थकाधिकारकगतं प्रस्थकज्ञानं तदेव निश्चयप्रमाणात्मकमिति तद्द्वारा तत् प्रमाणमिति, अत एव स्वाभिमुखदेशे मापकविशेषेण परिच्छिद्यमानमपि धान्यमिदं प्रस्थकमितं यावत् किं वा नेति विवादे प्रमाणमत्रापि देवदत्तः प्रस्थकाधिकारज्ञ इति लौकिका अपि व्यवहरन्ति, देवदत्तादेश्च प्रामाण्यं स्वगतप्रस्थकोपयोगात्मकनिश्चयप्रमाणाधारत्वादेवेति सिद्ध्यति प्रस्थकोपयोगस्यैव प्रस्थकत्वमिति; एवं, प्रस्थककर्तुरेव 'अयं प्रस्थकः' इति ज्ञानं तदेव प्रस्थकः, यतः प्रस्थककर्तृपुरुषसकाशात् प्रस्थकाद्युपादानकर्ता न यादृशं प्रस्थकं पश्यन्नपि प्रस्थक एवायमित्यवधारयति, किन्तु प्रस्थककर्तारं पृच्छति-एतेषु

मापकेषु कः प्रत्यक्षः? इति, तत्र 'अयं प्रत्यक्षः' इति प्रत्यक्षकर्तृपुरुषवचनतो निश्चिनोति-अयं प्रत्यक्ष इति, अत्रापि तद्वचनस्य जडात्मकत्वेन निश्चयप्रमाणात्मकत्वाभावान्न साक्षात् प्रामाण्यं किन्तु स्वोल्लिखितप्रत्यक्षकर्तृगतप्रत्यक्षोपयोगस्य निश्चयप्रमाणात्मकत्वेन तत्र प्रामाण्यमिति तद्द्वारा प्रामाण्यम्, अत एव तदर्थमुपस्थिता लोका एवं कथयन्ति 'प्रमाणमत्र प्रत्यक्षकर्ताऽयं देवदत्त' इति, तस्य स्वगतनिश्चयप्रमाणात्मकप्रत्यक्षोपयोगाधारत्वादेव प्रामाण्यम्, अतो व्यवस्थितमिदम् प्रत्यक्षकर्तृगतं प्रत्यक्षज्ञानं प्रत्यक्ष इति। शब्दोल्लिखित एवोपदिष्टः प्रत्यक्षाधिकारिगतः प्रत्यक्षकर्तृगतो वा प्रत्यक्षोपयोगः प्रत्यक्ष इष्यते, शब्दस्यान्न प्रामाण्यमिति शब्दप्राधान्योपगन्तॄणां शब्दसमभिरूढैवंभूतानामिष्ट मन्तव्यमिति।

प्रत्यक्षोपयोगातिरिक्ते वस्तुनि प्रत्यक्षस्याऽसद्भावे प्रत्यक्षत्वाऽनभ्युपगमलक्षणे हेतुमुपदर्शयति-निश्चयप्रमाणात्मकस्येति- प्रत्यक्षाधिकारिगतात्' इत्यादिविशेषणोक्त्येदमपि सुनिश्चितमेव, यदुत यः प्रत्यक्षोपयोगो न प्रत्यक्षाधिकारिगतो नवा प्रत्यक्षकर्तृगतः स निरुक्तविशेषणविशिष्टप्रत्यक्षोपयोगातिरिक्तत्वात् प्रत्यक्षो न भवति, यद्यपि शब्दनयाभासाऽद्वैताभ्युपगन्तृस्वपर्यवसानं घटादिकं निखिलमेव बाह्यवस्तु स्वाकारोपयोगस्वरूपमिति बाह्यप्रत्यक्षोऽपि स्वाकारोपयोगस्वरूप इत्यत सर्वस्यापि प्रत्यक्षोपयोगस्य प्रत्यक्षरूपता सिध्यति तथापि प्रत्यक्षोपयोगवन्तोऽपि निरुक्तपुरुषद्वयव्यतिरिक्ताः पुरुषा अन्येन 'किमयं प्रत्यक्षः?' इति पृष्टाः सन्त कथयन्ति-प्रत्यक्षाधिकारिणः प्रत्यक्षकर्तुर्वा सकाशादयं प्रत्यक्ष इति वयमवगच्छाम, नाऽत्राऽस्मदीयज्ञानानामस्माकं चैतन्निर्णये स्वातन्त्र्यम्, किन्तु स्वतन्त्रौ तावेवात्र प्रमाणमिति, तथा च निश्चयप्रमाणात्मकप्रत्यक्षोपयोगः प्रत्यक्षाधिकारि-प्रत्यक्षकर्त्रन्यतरगत प्रत्यक्ष इति, तदाधारत्वाच्च तावपि प्रमाणभूतत्वेन प्रत्यक्ष, निश्चयप्रमाणात्मकप्रत्यक्षस्य प्रत्यक्षोपयोगस्वरूपस्य अतद्वृत्तित्वाभावेन

तदाधारत्वाभावाच्चोक्तप्रस्थकोपयोगातिरिक्तस्य बाह्यप्रस्थकस्य प्रस्थकत्वम्, निरुक्तपुरुषद्वयस्य तूपयोगेन सह तादात्म्यमेव सम्बन्ध इति न तादृशोपयोगातिरिक्तत्वमित्याशयः। ननु मिध्यमानात्मकप्रस्थकोपयोगस्यैव प्रस्थकत्वाभ्युपगमे बाह्येऽपि विशिष्टसंस्थानाद्याकलिते वस्तुनि प्रस्थकोऽयमिति व्यपदेशो भवति, तस्य का गतिरित्याह–बाह्यप्रस्थकस्यापीति–प्रस्थकपदेन व्यपदिश्यमानस्य बाह्यस्यापीत्यर्थः, यदि बाह्यं तद् वस्तु योगातिरिक्तं स्याद्, अनुपयोगकालेऽपि सत् स्यात्, न चानुपलम्भकाले तत् समस्तीत्यत उपयोगस्वरूपमेव तदित्येवं बाह्यप्रस्थकस्योपयोगानतिरेकाश्रयणाद् उपयोगस्य प्रस्थकत्वे तदभिन्नतयाऽऽश्रितस्य बाह्यप्रस्थकस्यापि प्रस्थकत्वमुपपद्यत इत्यर्थः। यद्यपि बाह्यवादिना बाह्यप्रस्थकस्यानुपलम्भकालेऽपि सत्त्वमेव स्वीक्रियते, शब्दसमभिरूढैवम्भूतानामपि बाह्यवादित्वमवश्यमभ्युपगन्तव्यम्, यतो लिङ्गभेदेन शब्दस्यार्थभेदं साम्प्रतनयोऽभ्युपगच्छति, पर्यायभेदेनाऽर्थभेदं समभिरूढ उररीकरोति, व्युत्पत्तिनिमित्तक्रियाकाल एवार्थे शब्दप्रवृत्तिमेवम्भूत उपैति, यदि च साकारज्ञानमात्रस्यैव, सर्वस्य वस्तुनः उपयोगाभेदस्यैव वोपगम उक्तनयानां तर्हि तदुपदर्शितमन्तव्यभेदो न स्यादिति बाह्यवादिनामेवानुपलम्भकालेऽपि बाह्यप्रस्थकस्य सत्त्वमिति, तथापि सूक्ष्मविचारशालिनामेषामयमपि विचारः प्रोल्लसति यदुत, विनाशो भावानां व्यतिरिक्तो यैरुच्यते तैरतिरिक्ते विनाशेऽपि ज्ञाते किमिति भावस्तदानीं नाभ्युपेयते? विनाशस्य प्रतियोगिविरोधित्वादिति न वाच्यम्, तथा सति प्रतियोग्युपादान एव विनाश इति न स्यात्; यस्मिन् काले ध्वंसो न तस्मिन् काले प्रतियोगीति कालिकविरोधोऽनयोरिति चेत्, अयमपि विरोधः कुतोऽवधृतः? ध्वंसकाले प्रतियोगिनोऽनुपलम्भादिति चेत्, एवं सत्यापातो मार्गः, अनयोरुक्तदिशाभ्युपगतम्–यो यदोपलभ्यते तदा स समस्ति, यदा नोपलभ्यते तदा

नास्ति, इति सिद्धमिदम्-बाह्यप्रत्यक्षस्याऽनुपलम्भकालेऽसत्त्वमेवेति, अनेन हेतु-नोपयोगानतिरेकोऽपि बाह्यप्रत्यक्षस्य सिद्ध्यति, यतः, अनुपलम्भो नाम उपलम्भाभावः, तत्रान्यस्योपलम्भाभावदशायामपि स्वस्योपलम्भसद्भावे स्वस्य सत्त्वं भवत्येवेति स्वोपलम्भाभावकाल एव स्याऽसत्त्वं साधयितुमभिलषितम्, तथा च यो यदा नोपलभ्यते स तदा नास्तीति नियमोऽनेन विवक्षितः, तत्रैतत् स्यात्-स्वस्योपलम्भोऽन्य इति तदभावे कथं स्वस्याऽभावः ? ननु प्रमाणभावाधीना प्रमेयसिद्धिरिति स्वोपलम्भः स्वस्मिन् प्रमाणमिति तदभावे प्रमेयस्य स्वस्याऽभाव इति चेद्, एतदपि कुशकाशावलम्बनम्-प्रमाणेन प्रमेयः साध्यत इति तदभावे प्रमेयसिद्धिर्मा भवतु नाम, प्रमाणरूपकारणाभावात् प्रमेयसिद्धिरूपकार्याभावस्य व्याप्यत्वात्. सिद्धिविषयस्तु प्रमेयो न प्रमाणस्य कार्यमिति कथं तदभावात् प्रमेयाभावः ?, नापि प्रमाणेन सह प्रमेयस्य 'यदा प्रमेयं तदा प्रमाणम्' इत्येवं कालिकी व्याप्तिः, येन व्यापकीभूतस्य प्रमाणस्याऽभावाद् व्याप्यस्य प्रमेयस्याप्यभावः स्यात्. इत्थं परप्रश्ने इदमेवोत्तरं समीचीनतामञ्चति, यदुत उपलम्भ उपयोगो योऽवभासकत्वात् प्रमाणमिति गीयते. तस्य प्रमेयेण सह कथञ्चित् तादात्म्यमेव सम्बन्ध इत्युपयोगात्मकत्वादेवोपयोगेन सोऽवभासते, नान्यथा इत्युपलम्भरूपोपयोगतादात्म्यादेव यदोपलभ्यते तदा समस्तीत्यनुपलम्भकाले उपयोगात्मकस्वस्वरूपाभावादेव स्वस्याऽसत्त्वेनोपयोगानतिरेकाश्रयणस्य 'यद् येन सहैवोपलभ्यते तद् तद्रूपम्, यथा-वस्तुनः स्वरूपम्, स्वोपयोगेन सहैवोपलभ्यते बाह्य घस्तित्वमुपयोगरूपं तद्' इत्येवमुपगमलक्षणस्य भावात्, एतेन यदैव यद् उपलभ्यते तदैव तस्य सत्त्वमित्येतावताऽपि ज्ञानसमानकालीनत्वमेव ज्ञेयस्य सिद्ध्यति, न तु ज्ञानरूपत्वमित्याशङ्कापि व्युदस्ता, उक्तदिशा ज्ञानरूपत्वेनैव ज्ञानकाले प्रतिभाससनियमोपपत्तेरिति । नन्वित्थं बाह्यप्रत्यक्षस्योपयोगानतिरेकाश्रयणेन प्रत्यक्षव्यपदेशस्योपपादने घटादीनां बाह्यानामपि घटाद्याकारोपयोगानतिरेकाश्रयणाद्

घटादिपदव्यपदेश्यत्वं स्यात्, अतो व्यवहारमात्रस्यौपचारिकत्वं प्रसज्येत, न च शुद्धेष्वेषु नयेषूपचारो युक्त इत्युक्तदिशोपयोगानतिरेकाश्रयणवशाद् बाह्यप्रत्यक्षस्य प्रत्यक्षत्वोपपादनं न युक्तमित्यत आह-अन्यत इति-यदि बाह्यप्रत्यक्षस्य निश्चयमानानात्मकस्य प्रकारान्तरेण प्रत्यक्षत्वव्यपदेश्यत्वं न सम्भवति तदेत्यर्थः, ज्ञानाऽद्वैतनये सर्वस्य वस्तुनः स्वाकारविज्ञानरूपत्वमित्युपगन्तृयोगाचारमतेऽनुप्रवेशात् सर्वस्य वस्तुनो ज्ञानरूपत्वे सर्वान्तर्गतस्य बाह्यप्रत्यक्षस्यापि ज्ञानरूपत्वमित्यत एव प्रत्यक्षत्वं तस्येत्यतः प्रत्यक्षोपयोगातिरिक्तस्य यः प्रत्यक्षत्वानुपगमः शब्दादीनां तस्य साङ्गत्यमित्थमुपपत्तिपद्धतिमेतीत्याशयः ।

ननु 'उपयोगानतिरेकाद् ज्ञानाद्वैताद् वा' इत्यनभिधाय यदेतद् 'उपयोगानतिरेकाश्रयणाद्' इति, 'ज्ञानाऽद्वैतनयानुप्रवेशाद्' इति चाभिधानं तेनेदं सुस्पष्टमेवावभासते, यद् 'बाह्यप्रत्यक्षस्यापि' इत्युक्त्या ज्ञानाऽनात्मकत्वमपि तस्य, निश्चयमानात्मकत्वमन्तरेण न प्रत्यक्षत्वम्, यत् उपयोगानतिरेकाश्रयणं ज्ञानाऽद्वैतनयानुप्रवेशो वा, तेन च ज्ञानात्मकत्वमपि तस्य, तत्र यस्य नयस्य यद्वस्तुगतज्ञानात्मकत्वं विषयो न तस्य नयस्य तद्वस्तुगतज्ञानाऽनात्मकत्वं विषयः, 'बाह्यप्रत्यक्षस्यापि' इत्येवमुक्तेः पृथक्कृतानां शब्दादिज्ञानानां स्वयं तस्य ज्ञानाऽनात्मकत्वमेवानुमतम्, 'उपयोगानतिरेकाश्रयणाज्ज्ञानाद्वैतनयानुप्रवेशाद् वा' इत्यनेन च नयान्तराश्रयणतो ज्ञानात्मकत्वम्, तथा च यो नयो ज्ञानात्मकत्वं तस्य स्वीकरोति तस्याज्ञानात्मकत्वे गजनिमीलिकामेवावलम्बते, यश्चाज्ञानात्मकत्वं तस्योरीकरोति स तस्य ज्ञानात्मकत्वमुपेक्षत एव, बाह्यप्रत्यक्षस्याप्युपयोगानतिरेकाश्रयणाज्ज्ञानाद्वैतनयानुप्रवेशाद् वा प्रत्यक्षत्वमित्येवमभिधानं च ज्ञानात्मकत्वलक्षणो य एकनयविषयः, यश्चाज्ञानात्मकत्वलक्षणोऽपरनयविषयस्तथाभूतोभयनयविषयसमावेशः प्रमाणवचन एव सम्भवति, न तु नयवचने, इति तथाभूतोभयनयविषयकत्वं ज्ञानात्मकत्वा-

भ्युपगन्तृनये, अज्ञानात्मकत्वाभ्युपगन्तृनये वा सम्भवतीति तथा प्ररूपयत एकैकस्य नयस्य वस्त्वंशावगाहित्वाभावादनयत्वमेव, मिलितस्य नयद्वयस्य तथा प्ररूपकत्वसम्भवेऽपि प्रमाणत्वमेव न नयत्वमित्याशङ्क्य प्रतिक्षिपति—न चेति—अस्य 'आशङ्कनीयम्' इत्यनेनान्वयः, सर्वस्य वस्तुनोऽनेकान्तात्मकत्वं तावत् प्रमाणतः सुव्यवस्थितमिति बाह्यप्रत्यक्षस्यापि ज्ञानात्मकत्वं यन्नयाभिप्रेतं तस्मिन् नये ज्ञानेन सह विषयस्य तादात्म्यमेव सम्बन्ध इति ज्ञानस्वरूपत्वाज्ज्ञानात्मकत्वम्, बाह्यप्रत्यक्षस्याज्ञानात्मकत्वं यन्नयाभिप्रेतं तस्मिन् नये ज्ञानेन सह विषयस्य विषयविषयिभावः सम्बन्ध इति ज्ञानविषयत्वाज्ज्ञानात्मकत्वम्, तथा च ज्ञानात्मकः प्रत्यक्षो ज्ञानात्मक इत्येवं ज्ञानात्मकत्व ज्ञानात्मकत्वोभयनयविषयरूपसमावेशाऽसम्भवेऽपि प्रत्यक्षो ज्ञानस्वरूप इत्येवमुक्तिर्नयद्वयेऽपि सम्भवति, तत्र बाह्यप्रत्यक्षस्य ज्ञानात्मकत्वं यन्नयेऽभिमतं तन्नये ज्ञानस्वरूप इति ज्ञानविषय इत्येवरूपतयोपपद्यते, तथा ज्ञानात्मकत्वं यन्नयेऽभिमतं तन्नये ज्ञानसंबद्ध इति ज्ञानाभिन्न इत्येवंरूपतयोपपद्यते, ज्ञानसम्बद्धस्यैव प्रत्यक्षस्य प्रत्यक्षत्वपरिचयत्वम्, सम्बन्धश्च तादात्म्यम्, तथा ज्ञानातिरेकाश्रयणाज्ज्ञानाद्वैतनयानुप्रवेशाद् वा सम्भवतीति नये सुस्थमित्याशयेन निषेधहेतुमुपदर्शयति—तादात्म्येनेति—अभेदेनेत्यर्थः। उभयरूपसमावेशेऽपि ज्ञानात्मकत्वाऽज्ञानात्मकत्वोभयरूपसमावेशसम्भवेऽपि। विषयत्व—तादात्म्याभ्यामिति—ज्ञानस्य विषयेण विषयत्वं सम्बन्ध इति तत्सम्बन्धापेक्षया ज्ञानाऽत्मकत्वम्, ज्ञानस्य तादात्म्यं सम्बन्ध इति तत्सम्बन्धापेक्षया ज्ञानात्मकत्वमित्येवमुभयरूपसमावेशात्, तथा च तादात्म्यसम्बन्धापेक्षया ज्ञानात्मकत्वस्य सम्भवेन तदवगाहिनो नयस्य, विषयत्वसम्बन्धापेक्षया ज्ञानाऽज्ञानात्मकत्वस्य सम्भवेन तदवगाहिनो नयस्य च नानयत्वप्रसङ्गः, यदा च बाह्यप्रत्यक्षस्यापि प्रत्यक्षत्वमुपयोगातिरेकाश्रयणेन ज्ञानाद्वैतनयानुप्रवेशेन वाऽभ्युपगच्छन्ति शब्दनयास्तदानीं तस्य ज्ञानात्मकत्वे गजनिमीलिकामेवाश्रयन्ति त इति न प्रमाणत्वप्रसङ्गोऽपि

तेषामित्याशयः। ननु विषयत्वेनापि ज्ञानात्मकत्वमेव नाऽज्ञानात्मकत्वं विषयत्वस्य तादात्म्यरूपत्वादिति कथं विषयत्व-तादात्म्याभ्यामुभयरूपसमावेश इत्यत आह–विषयत्वमपीति–तथा च यन्नयेन विषयत्वस्य कथञ्चित् तादात्म्यरूपता तन्नयेन विषयत्वस्याज्ञानात्मकत्वनिमित्तत्वं नाऽत्राभिप्रेतमित्याशयः। अथवा येन नयेन विषयत्वं कथञ्चित्तादात्म्यं तन्नयेनैकेनैव विषयत्वलक्षणनिमित्तेन ज्ञानात्मकत्वाऽज्ञानात्मकत्वोभयसमावेश इत्याह–विषयत्वमपीति। कथञ्चित्तादात्म्य ज्ञानेन सह विषयस्य कथञ्चित्तादात्म्यम्, कथञ्चित्तादात्म्यञ्च भेदसहिष्णुरभेद इति ज्ञानात्मकत्वाऽज्ञानात्मकत्वोभयसमावेश इत्याशयः। नयाश्रयणेन नयान्तराभिप्रेतकथञ्चित्तादात्म्यलक्षणविषयताश्रयणेन, 'उक्तम्' इत्यनेनान्वयः। तुल्यार्थत्वम् एकशब्दवाच्यत्वेन तुल्यार्थत्वं सदृशरूपत्वम्, तच्च तदा भवेद् यादृशं वाच्यत्वमेकत्र तादृशमेव भिन्नु, तच्च विषयत्वस्य कथञ्चित्तादात्म्यरूपत्वे सत्युपपद्यते, यतः शब्दजन्यबोधविषयत्वमर्थस्य शब्दवाच्यत्वम्, तच्च विषयत्वं तादात्म्यरूपम्, एवं तेन तज्ज्ञानमप्यभिधीयत इति ज्ञानस्यापि शब्दजन्यबोधविषयत्वम्, तच्च ज्ञानं शब्दजन्यमेवेति स्वस्यैव स्वविषयत्वमिति तदपि तादात्म्यमेव, शब्दोऽपि स्वेनाभिधीयते, स्वस्य स्वतादात्म्यमप्यस्ति स्वजन्यबोधविषयत्वमप्यस्ति, तद्विषयत्वमपि तादात्म्यमेवेत्येवं तुल्यार्थत्वम्, यदि च विषयत्वं सर्वथा तादात्म्यमेव स्याद्, एवं सत्येकस्वरूपत्वमेव स्यान्न तुल्यस्वरूपत्वमतः कथञ्चित्तादात्म्यमेव विषयत्वम्, तथा सति यदपेक्षयाऽर्थेन सह तादात्म्यं न तदपेक्षयाऽभिधानेन सह, ज्ञानेन सह वा, किन्तु भिन्नभिन्ननिमित्तापेक्षया। एवं तुल्यार्थत्व यदि तुल्यप्रयोजनकत्वम्, तदपि कथञ्चित्तादात्म्यपक्षे घटते, सर्वथा तादात्म्ये तु एकप्रयोजनकत्वमेव स्यान्न तुल्यप्रयोजनकत्वमिति।

वस्तुतः शब्द-समभिरूढैवम्भूतानां सूक्ष्मेक्षिकामाश्रयतां न पराभ्युपगमे निर्भरः, किन्तु प्रथमतो विवेकेन स्वस्वरूपावगमाय

बाह्यमाश्रित्य लिङ्गभेद–पर्यायभेद–क्रियाभेदसमाश्रयेण शब्दार्थभेदाभ्युपगमव्यवस्था, पर्यन्ते तु साकार–निराकारज्ञान–शून्यवादाभ्युपगन्तृत्वमेव क्रमेण तेषाम्, शून्यवादाभ्युपगन्ता तु व्यवहृत्युपपादनाय व्यवहारदशायां ज्ञानाभ्युपगन्तैव, विवेकस्तु तदानीं लिङ्गभेदज्ञान–पर्यायभेदज्ञान-क्रियाभेदज्ञानकृततत्तदर्थाकारज्ञानविलक्षणज्ञानस्वरूपभेदाभ्युपगमनिबन्धनः, इत्थं च प्रत्यक्षोपयोग एव प्रत्यक्ष इति तेषां मते ज्ञानात्मत्वं प्रत्यक्षस्य, नैगम–सङ्ग्रह–व्यवहारर्जुसूत्रनयानां मतेऽज्ञानात्मकत्वं प्रत्यक्षस्य, तत्र पराशङ्कामुत्थाप्याऽपहस्तयति–न चेति –अस्य 'आशङ्कनीयम्' इत्यनेनान्वयः, ज्ञानात्मकत्वं प्रत्यक्षस्य साम्प्रतादिनयत्रयस्वरूपशब्दनयविषयः, अज्ञानात्मकत्वं नैगमादिनयचतुष्टयस्वरूपार्थनयविषयस्तदुभयात्मको य. शब्दार्थोभयनयविषयस्तं स्वीकृत्य वस्तुनि समावेशाविरोधाद् ज्ञानात्मकं चेत्स्यादज्ञानात्मकम्, अज्ञानात्मकं चेन्न ज्ञानात्मकं ज्ञानात्मकत्वाऽज्ञानात्मकत्वयोस्तादात्म्यासम्भवात्, तथा च वस्तु ज्ञानात्मकाऽज्ञानात्मकयोरन्यतरदेव भवितुमर्हति, तच्च परस्परविरुद्धधर्माश्रिताभ्यामर्थनय शब्दनयाभ्यां निर्णेतुमशक्यमिति तथाभूतवस्त्वंशनिर्णयाऽनात्मकत्वात् प्रत्येकमर्थनयस्य शब्दनयस्य चाऽनयत्वं स्यादिति चाशङ्कनीयमित्यर्थः । यद्यपि विनिगमनाविरहादुभयोर्मध्ये नैकस्यैव निर्णय इत्येकान्तेन सम्भवति नयविरुद्धयोरुभयोः सर्वथा तादात्म्यसम्भवस्तथापि किञ्चिदपेक्षया यज्ज्ञानात्मकत्वं तच्छब्दनयोऽभ्युपगच्छति, यच्च किञ्चिदपेक्षयाऽज्ञानात्मकत्वं तदर्थनय उररीकरोति, अर्थनये ज्ञानस्य विषये विषयत्वमेव सम्बन्ध इति विषयत्वापेक्षयाऽज्ञानात्मकत्वम्, शब्दनये ज्ञानस्य तादात्म्यमेव सम्बन्ध इति तादात्म्यापेक्षया ज्ञानात्मकत्वमित्येवं नयद्वयविषयसमावेशस्यैकत्र घटमानत्वात् प्रत्येकं स्वस्वविषयनिर्णायकस्य शब्दनयस्याऽर्थनयस्य च वस्त्वंशावगाहिनिर्णयात्मकत्वेन नयत्वमुपपद्यत इति निषेधहेतुमुपदर्शयति–तादात्म्येनेति–सर्वथा तादात्म्येनेत्यर्थः । तदुभयेति–ज्ञानात्मकत्वाऽज्ञानात्मकत्वोभयेत्यर्थः । ननु ज्ञान-विषययो-

विषयत्वमेव सम्बन्धतया भासत इत्यर्थनयस्य विषयत्वापेक्षया प्रमेय-कस्याऽज्ञानात्मकत्वमननं युज्यते, तादात्म्यं तु तयोः संसर्गतया भासत एव नेति तदपेक्षया प्रत्यक्षस्य ज्ञानात्मकत्वमननं कथं सङ्गतमित्यत आह-विषयत्वगर्भीति । नयान्तराकृतं नयान्तरस्यार्थनयाद् भिन्नस्य शब्दनयस्याभिप्रायः । ननु किंवृत्तिचिद्विधिः स्याद्वाद एवेति कथञ्चित्तादात्म्यमिति स्याद्वादप्रमाणसम्मतम्, कथं तदुपगमो नयान्तरस्येति चेत्, सत्यम्-किन्तु प्रमाणे कथञ्चिद्वादे उभयोरपि प्राधान्यम्, अथ त्वभेदस्यैव प्राधान्यं वस्तुभूतत्वं च तस्य, भेदस्य गौणत्वमविद्याकल्पितत्वमेव तस्य न वस्तुभूतत्वम्, स्याद्वादे तु भेदाऽभेदयोरुभयोरपि वस्तुभूतत्वमिति विशेष इति बोध्यम्। तदाश्रयणेन विषयत्वं कथञ्चित्तादात्म्यमिति शब्दनयाकूताश्रयणेन । अर्थाभिधान-प्रत्ययास्तुल्यनामधेया इति-अर्थोऽपि ज्ञानविषयत्वाज्ज्ञानात्मा, शब्दोऽपि तद्वत् तथा, प्रत्ययस्तु स्वरूपत एव तथेति, अर्थस्य घटादेर्यद् जलाहरणादिकं कार्यं तद्व्यतिरिक्ते ज्ञानस्वरूपमेव, शब्दस्य कार्यमर्थप्रत्यायनं ज्ञानमेव, ज्ञानस्य कार्यमर्थावभासनं स्वस्वरूपावभासनं च ज्ञानमेवेति नत्तत्का-र्याणां ज्ञानव्यक्तीनां भेदेऽपि ज्ञानत्वेन सादृश्यमस्तीति तुल्यार्थत्वं सदृशप्रयोजनकत्वलक्षणमुपपद्यत इति ।

पूर्वव्याख्यानार्थावगमोऽतिसूक्ष्मेक्षिकानुयद्वमानसानामेव, इदं तु व्याख्यानं स्थूलमतीनामपि सुगमावबोधम् । किञ्च, पूर्वव्याख्यानं शब्द-नय एव 'बाह्यप्रत्यक्षस्यापि' इत्युक्त्याऽज्ञानात्मकत्वस्य 'उपयोगानति-रेकाश्रयणाद्' इत्यानुक्त्या ज्ञानात्मकत्वस्य च प्राप्तौ तत्सङ्गमनार्थं प्रवृत्तम्, तत्र 'नयान्तराकूतम्' इत्यनेन शब्दनयाकूतस्य ग्रहणं न सम्भवति, प्रकृतनयभिन्नस्यैव नयान्तरशब्दप्रतिपाद्यत्वेन शब्दनय-स्यैव च प्रकृतनयत्वेन तद्भिन्नत्वस्य शब्दनयेऽभावात्, अर्थनयस्य नयान्तरत्वेऽपि तन्मते विषयत्वस्य कथञ्चित्तादात्म्याभावेन तत्तात्प-र्यस्य ग्रहणासम्भवात् शब्दनयार्थनयातिरिक्तस्तु परिगणितनयमध्य-

बहिर्भूतो नास्त्येव कश्चिन्नय इति तदाकूतपरत्वमपि न सम्भवतीत्यत उक्तव्याख्यानमेव सम्यगन्वमञ्चतीति बोध्यम् ॥

१०६ पृष्ठे २३ पङ्क्तौ 'इत्यन्यत्र विस्तरः' इत्यनन्तरम्—

यथा च भावानां वर्तमानक्षणसम्बन्धो न तथाऽतीतत्वा-ऽनागतत्वसम्बन्धः अतीतत्वस्यानागतत्वेन सह विरोधे तयोरेकत्र भावे समावेशासम्भवात्, अतीतानागतावारवर्तमानक्षणादिकल्पतस्तु तयोर्विरोधो नाशङ्कनीयः येनातीतत्वानागतत्वे अपि माने स्याताम्, यतः प्रत्यक्षमेव वस्तुसाधकम्, तच्च वर्तमानाकारमेव नातीतानागताकारम्, विकल्पस्त्वतीतानागताकारोऽपीति न वस्तुसिद्धिनिबन्धनमिति न ततोऽतीतत्वा ऽनागतत्वयोः सिद्धिः। तत्रेयमाशङ्का—पूर्वपूर्वज्ञानाद् उत्तरोत्तरज्ञानप्रभव इति यत् पूर्वज्ञानं तत् समनन्तरप्रत्ययशब्देनोच्यते, तथा च यथा प्रत्यक्षज्ञानं समनन्तरप्रत्ययप्रभवं तथा विकल्पोऽपि समनन्तरप्रत्ययप्रभव इति प्रत्यक्षस्य वस्त्वनुभवरूपत्वाद् वस्तुसाधकत्वे विकल्पस्यापि वस्त्वनुभवरूपत्वाद् वस्तुसाधकत्वं स्यादिति प्रत्यक्षस्येव तस्यापि प्रामाण्यं स्यादिति प्रत्यक्षविषयत्वेऽपि विकल्पविषयत्वादतीतत्वा ऽनागतत्वे स्यातामेव मानगते। यदि च विकल्पस्य प्रामाण्यं नानुमन्यते तर्हि विकल्पद्वारा प्रत्यक्षस्यापि प्रामाण्यं न स्यात् अभ्युपगम्यते च क्षणिकत्वादिना प्रत्यक्षस्य विकल्पद्वारा प्रामाण्यम् तत एव च नीलादिवस्तुस्वलक्षणावगाहि प्रत्यक्षं यथा वस्तुनि नीलादिरूपत्वमवगाहते तथा क्षणिकत्वमप्यवगाहते परं नीलादिविकल्पमुत्पादयतीति नीलादौ तस्य प्रामाण्यम् क्षणिकत्वादिविकल्पं च नोत्पादयतीति न तस्य क्षणिकत्वादौ प्रामाण्यम्, अत एव च 'यत् सत् तत् क्षणिकम्' इत्याद्यनुमानापेक्षा। 'यत्रैव०' इत्यादि वचनं चोक्तार्थस्यैवावेदकम्, यत्रैव-यस्मिन्नेव विषये नीलादौ एनाम् विकल्पात्मिकां बुद्धिम् जनयेत् तत्रैव-तस्मिन्नेव नीलादौ, अस्य निर्विकल्पकप्रत्यक्षस्य प्रमाणता-

प्रामाण्यम्, इति निरुक्तवचनार्थः । तथा च प्रत्यक्षविषयेऽप्यर्थे विकल्पद्वारैव प्रत्यक्षस्य प्रामाण्यम्, यदि च विकल्पस्तत्र प्रमाणं न भवेत्, न भवेत् तर्हि तद्द्वारा प्रत्यक्षमपि प्रमाणम्, यथा च नीलादिविकल्पकारणस्य नीलादिप्रत्यक्षस्यानुभवत्वं तथाऽतीताऽनागताकारज्ञानरूपविकल्पकारणप्रत्यक्षस्यापि समनन्तरप्रत्ययात्मकस्यानुभवत्वमित्येवं नीलादिविकल्पाऽतीतत्वा-ऽनागतत्वविकल्पयोरविशेषे नीलादिविकल्पस्येवातीतत्वानागतत्वविकल्पस्यापि स्वविषयसाधकत्वं स्यादेवेति " अनुभवाविशेषे विकल्पाविशेषः " इतिमूलग्रन्थाभिप्रायः । नीलादिवस्तुसाधकनीलादिविकल्पोपादानभूतप्रत्यक्षतो विलक्षणाऽतीतानागताकारज्ञानस्वरूपविकल्पोपादानीभूता प्रत्यक्षव्यक्तिः, यस्याः प्रभूतवासनालक्षणदोषः सहकारीति दोषसहकृतप्रत्यक्षप्रभवस्यातीतत्वादिविकल्पस्य दोषासहकृतप्रत्यक्षप्रभवनीलादिविकल्पव्यक्तितो वैलक्षण्यमिति न नीलादिविकल्पस्येवातीतादिविकल्पस्य वस्तुसाधकत्वमित्यभिप्रायः " न-उपादान० " इत्यादिसमाधानमूलस्य ॥

१२७ पृष्ठे १७ पङ्क्तौ 'योग्यम्' इत्यनन्तरम्—

ऋजुसूत्राद् विशेषोऽस्य भावमात्राभिमानतः । सप्तभङ्गार्पणा-लिङ्गभेदादेर्याऽर्थभेदतः ॥ १ ॥ [ नयोपदेश–श्लो०२४ ] इति वचनाद् भावनिक्षेपमात्राभ्युपगन्तृत्वं सप्तभङ्ग्यर्पकत्वं लिङ्गभेदादितोऽर्थभेदाभ्युपगन्तृत्वं चेत्येतत्त्रयं साम्प्रतापरपर्यायस्य शब्दनयस्यार्थनयाद् ऋजुसूत्राद् विशेषः, तत्र सप्तभङ्गी द्विविधा–अर्थनयाश्रिता शब्दनयाश्रिता च, तत्रार्थनयाश्रितायां सप्तभङ्ग्यां न शब्दनयाभ्युपगतभङ्गस्य प्रवृत्तता, शब्दनयाश्रितायां च सप्तभङ्ग्यां आर्थनयाभ्युपगतभङ्गस्य प्रवेश इति शब्दप्राधान्याऽर्थप्राधान्याभ्युपगमसमुत्थयोः सप्तभङ्ग्योर्विभिन्नस्वा-नयोर्नांशाधिकारः, यतोऽर्थनयाश्रिता सप्तभङ्गी सङ्ग्रहनयोत्थसत्त्वप्रतिपादकप्रथमभङ्ग–व्यवहारनयोत्थासत्त्वप्रतिपादकद्वितीयभङ्ग–ऋजुसूत्रनयोत्थाऽवक्तव्यत्वप्रतिपादकतृतीयभङ्ग-सङ्ग्रह–व्यवहारनय

द्वयसमुत्थक्रमिकसत्त्वाऽसत्त्वोभयप्रतिपादकतुरीयभङ्गः प्रथमतृतीय-संयोगजपञ्चमभङ्ग-द्वितीयतृतीयसंयोगजषष्ठभङ्ग-प्रथमद्वितीयतृतीयसंयोगजसप्तमभङ्गैश्च संघटितमूर्तिः, शब्दनयाश्रिता सप्तभङ्गी पुनः पर्यायभेदेऽप्यर्थस्याभेद इत्यभेदाभ्युपगमप्रवणसाम्प्रताख्यशब्दनयसमुत्थप्रथमभङ्ग-पर्यायक्रियाभेदप्रयुक्तार्थभेदाभ्युपगमप्रवणसमभिरूढैवम्भूताख्यशब्दनयसमुत्थद्वितीयभङ्गघटिता, त्रिभिरपि शब्दनयैर्युगपद्भेदाऽभेदोभयविवक्षया तृतीयस्यावक्तव्यत्वभङ्गस्य, क्रमिकतदुभयविवक्षया तुरीयभङ्गस्य, प्रथम-तृतीयभङ्गसंयोगादितः पञ्चम षष्ठ-सप्तमभङ्गानां सम्भवात् तृतीयादिभङ्गैश्च घटिता, किन्तु शब्दप्रधाने शब्दनये वचनातीतगोचरोऽवक्तव्यत्वभङ्गो न सम्भवति, परमत्रापि तृतीयभङ्गोल्लास ऋजुसूत्रादेवेति पर्यालोचनया शब्दा-ऽर्थनयद्वयाश्रिता या सप्तभङ्गी तस्या यथाधिकारः, यस्याः सप्तभङ्ग्या प्रथमभङ्गो यन्नयसमुत्थस्तस्यां तन्नयस्य प्राधान्यमिति कृत्वा तत्र साम्प्रतनयस्य प्राधान्यमिति सा शब्दनयसप्तभङ्गीति व्यपदेशार्हा, तत्र प्रथम-तृतीय-तुर्य पञ्चम सप्तमभङ्गाः साम्प्रतनयविषयविषयकत्वात् साम्प्रतनयसमुत्थाः, तृतीय-पञ्चम-षष्ठ सप्तमभङ्गा ऋजुसूत्रनयसमुत्था इत्येकाधिकभङ्गाभ्युपगन्तृत्वात् साम्प्रताख्यशब्दनयस्य ऋजुसूत्राद् विशेष इति सूक्ष्मेक्षिकयाऽऽभाति ॥

१३६ पृष्ठे, २६ पङ्क्तौ,'तस्येति' इत्यनन्तरम्—

प्रथमनयेन यद्धर्मविशिष्टोऽर्थो गोचरीक्रियते तद्वान्तरधर्मविशिष्टतयैव तद्विषयीभूतार्थस्य गोचरीकरणमुत्तरनयेन, विशेष्यीभूतधर्मिणमुपादायैव पूर्वोत्तरनययोः समानविषयत्वलक्षणप्रसङ्गसङ्गतिरिति पूर्वनयाऽविषयीभूतावान्तरधर्मविषयकत्वाद् उत्तरनयनिरूपणस्य न वैफल्यम्, प्रकृते तु नैगमादिनयेषु धात्वर्थक्रियालक्षणधर्मस्योपलक्षणविधया विषयत्वम्, एवम्भूतनये तु विशेषणतया विषयत्वमिति विशेषः ॥

१३७ पत्रे, १२ पङ्क्तौ. 'प्रकृतेति' इत्यनन्तरम्—

चैतन्यस्वरूपप्राणधारणलक्षणजीवनरूपधात्वर्थस्यापि चैत्रमैत्रादिसकलजीवेषु विभिन्नत्वमेव, तत्रापि प्रत्येकं प्रतिक्षणं भिन्नत्वमित्येवं चैतन्यसन्तानानामनेकेषामेकाकारापेक्षया जीवमात्रस्यापि एकचैतन्यमेवेति निक्षेपान्तरं व्यवहाराश्रितं भवति, तथाभूतस्यापि व्यापकीभूतस्य चैतन्यस्य मायालक्षणशक्तिमत एव भाव इति निक्षेपान्तरम्, मायाऽप्यनिर्वचनीया वस्तुतो नास्त्येवेति केवलमेव चैतन्यमिति निक्षेपान्तरं ब्रह्मवादियुक्त्याऽऽश्रितं भवति, तदेव चैतन्यं सच्चिदानन्दस्वरूपम्, तदधिष्ठानकत्वादेव तद्विवर्तेष्वनिर्वचनीयेषु घटादिषु सदादिप्रतीतिरिति निक्षेपान्तरमुपतिष्ठते, निर्धर्मकं तच्चैतन्यं सत्त्वचित्त्वाऽऽनन्दत्वादिधर्मविकलत्वान्न सदादिव्यपदेश्यमित्यद्वैतमेव तदिति निक्षेपान्तरमप्यागच्छति, द्वैतस्य वस्तुनोऽभावे तद्विरोधिनो नाऽद्वैतस्यापि सम्भव, घटपटादीनामसतां निरधिष्ठानक एव भ्रमः, भ्रमे च स्वत एव भ्रमसन्ततिर्निरस्यत इति शून्यमेव तत्त्वमिति चैतन्याश्रितविचारपरम्परायां यदि न ब्रह्मवादे विश्रामः, किन्तु तत्रापि विकल्पतोऽवान्तरसूक्ष्म सूक्ष्मतर सूक्ष्मतमचैतन्यस्वरूपकल्पनाऽऽश्रीयते तदाऽनवस्था, तद्भयाद् ब्रह्मवादे शून्यतायां चोक्तरीत्या पर्यवसानम्, तदा शुद्धचैतन्यात्मकप्राणधारणलक्षणजीवनरूपधात्वर्थात्मकप्रकृतभावस्यापर्यवसानं स्यात्, अतः सम्प्रदायमनतिक्रम्यौदयिकभावरूपजीवनस्यैवैवम्भूतनये जीवपदव्युत्पत्तिनिमित्तविषयत्वमुचितमिति ॥

इति श्री तपोगच्छाधिपति-शासनसम्राड् जगद्गुरु श्री विजयनेमिसूरीश्वरपट्टालङ्कारेण
व्याकरणवाचस्पति-शास्त्रविशारद-कविरत्न-श्रीविजयलावण्यसूरिणा
विरचिता नयरहस्यप्रकरणस्य प्रमोदा विवृतिः

समाप्ता ।

छद्मस्थेषु सदा स्खलद्गतितया दोषप्रबन्धावये
नो दृश्यावदसूर्दोषपटलं स्यादस्य धीमज्जनाः ।
नो मार्ग्याः कृतिनो निसर्गसुभगाः यस्मान्मया शोधने
शेषो दोषगणप्रमार्जनविधिः स्वाभाविकोऽयं यतः ॥ १ ॥

प्रशस्तिः—

[ उपजातिवृत्तम् ]

श्रीनाभिजातं शुभशान्तिनाथं सुभव्यराजीनयनामृतं च ।
प्रकाशिपं श्रीशुभपद्ममानं नमामि नित्यं जिनराजराजम् ॥ १ ॥

[ शार्दूलविक्रीडितवृत्तानि ]

लोकालोकविलोकिनो जिनपतेः कृतीकृतांहस्ततेः
सोल्लासैरमराधिपैः कृतनतेः स्यात्त्रिगाढ्युतेः ।
गीरीशस्य च मम शासनपतेः सिद्धार्थसत्सूनतेः
पट्टं धर्मधुरन्धरं विजयते वीरप्रभोः सन्मतेः ॥ २ ॥
तत्र श्रीश्रुतकेवली गणिमणिश्चारित्रचूलामणिः
निर्ग्रन्थाभिधगच्छगच्छमतनोत् स्वामी सुधर्माभिधः ।
कोटीशः किल सूरिमन्त्रकलनात् कोटीति नाम्नोज्ज्वलं
गच्छं चान्द्रमतिश्च सुस्थित इति श्रीसूरिपोऽनुस्थपात् ॥ ३ ॥
चान्द्रं चन्द्रकलाकलापधवलं भूयो वनोमालितं
गच्छं चानुचकार चारुचरणः, श्रीचन्द्रसूरीश्वरः ।
तस्यैवानु च सूरिराट् शमनिधिः सामन्तभद्राभिधः
स्थलेने वनवासिगच्छममलं दीप्तं गुणाढ्यं गणे ॥ ४ ॥
संतापापहरं समाश्रितनृणां शाखानदीलालितं
दीक्षाज्ञानशुभास्पदं सुचरणाढ्यं विशालोन्नतम् ।
श्रेयांसं वटगच्छमतुलं सत्पुण्यपण्यापणम्
माद्यार्थोधिप मानतान तदनु श्रीसर्वदेवाभिधः ॥ ५ ॥

भूपालेन च मेदपाटपतिना दृष्ट्वा तपो दुष्करं
सान्वर्थं च महातपा इति पदं यस्मै ददे सम्मदात् ।
पुण्यात्मा विदधे ततः स च जगच्चन्द्राभिधः सूरिराट्
यहां भूरिगुणालयं किल तपागच्छं सदच्छाशयम् ॥ ६ ॥
गच्छेऽस्मिंश्च परम्परागतमहोवैराग्यलीलालये
श्रद्धाचारचितां कुलालयमये राद्धान्तमार्गाध्वगे ।
श्रीहीरेण जिनेन्द्रशासनशिरोहीरेण धीरेण च
भूपालाकबरप्रबोधनकृता पुण्यात्मना सूरिणा ॥ ७ ॥
मोहेलापतिपाटने पटुतमे सद्धर्मसेनाकरे
श्रीसेनेन च सैनिकेन गुणिना श्रेयोऽर्थिना सूरिणा ।
श्रीदेवेन च सूरिणा विबुधतास्फातिं परां बिभ्रता
श्रीसिंहेन च पापनागहरिणा श्रीसूरिणोल्लासिते ॥ ८ ॥
पृथ्वीं पादप्रचारतो विदधतो ध्वस्तान्धकारां वरां
निर्मातुः शमसागरोद्भवरमां सद्वृत्ततांशालिनः ।
तत्सौम्याकृतिमालिनः कुमुदयाऽऽनन्दं ददानस्य च
नाथोत्तारकपस्य वृद्धिविजयाभिख्यस्य वै सद्गुरोः ॥ ९ ॥
पादाम्भोजरजोमरन्दमधुपो विद्याविलासालयो
भूपालावलिमौलिलालितपदाम्भोजो जनानन्ददः ।
उच्चाचारप्रचारप्रोद्यतमना नानामुनीनां गुरुः
प्रौढोदाऽऽगमयोगमुख्यविधिना प्रस्थानपञ्चत्परः ॥ १० ॥
स्वं वात्स्यं समयं सदा सहृदयं विद्वांश्च दिव्याकृति-
र्नित्यं धर्मकथाविधौ विलसता माधुर्यमाबिभ्रता ।
गम्भीरध्वनिना घनाघनरवं हास्यास्पदं कुर्वता
तारेणापि समस्तकेकिनिकराऽऽनन्दं ददान. सना ॥ ११ ॥
दीर्घाभावने समुद्भुतिकृतो लीनान्तरालः सदा
शीलं शैशवनोऽमलं च कलयन्नाचार्यचूलामणिः ।

सम्राट् श्रीजिनशासनस्य वसति प्रौढप्रतापश्रियो
राराजीतितरां जगद्गुरुरयं श्रीनेमिसूरीश्वरः ॥ १२ ॥

[ वसन्ततिलकावृत्ते ]

ईडे सुदर्शनधरं पुरुषोत्तमं स मैत्रीयुतं समुदयश्रियमादधानम् ।
सच्चन्दनं सुमनसामनुरागवन्तं विज्ञानतामरसतामरसाकरं च ॥ १३ ॥
भव्यालिपङ्क्तिकलितं अवतातिगं च नित्यं पुनानमखिलं किल साधुपद्मम् ।
सन्दर्शिताऽमृतपथं यद्देशनातो लावण्यमन्दिरमुदारमतोऽभिरामम्
॥ १४ ॥

[ उपजातिवृत्ते ]

तस्य नरेन्द्रैः सुजयन्तमार्यैर्दक्षं सुशीलोदयनिग्रहविश्वम् ।
कल्याणभूस्थैर्यलनामधेयजिनप्रभोल्लासितभावविश्वम् ॥ १५ ॥
सच्चन्दनं सज्जनतापहारं प्रौढप्रभावं विबुधार्चितं च ।
सन्मङ्गलं सच्चरणात्रिकान्तं मतीशमान्यं गुणराजिरम्यम् ॥ १६ ॥
तस्यानल्पगुणस्य नेमिसुगुरोः सत्पट्टपद्माकरे
लावण्येन कृतेन रैवतगिरौ नत्वा शिवानन्दनम् ।
१० ० २
खाखाकाशदृशा मितेऽर्कसमये सच्चैत्रराकादिने
ग्रन्थे श्रीमयणो रहस्यनिहिते टीका प्रमोदा कृता ॥ १७ ॥
चन्द्रार्कमहिमा यावद् भाति कान्तिकृतो भुवि ।
तावद् विवेकशालिना ग्रन्थोऽयं हृदि नन्दतु ॥ १८ ॥

इति प्रमोदाविवृतिः सम्पूर्णा ॥

टीकाग्रम्—त्रयस्त्रीणि सहस्राणि ॥

## २ परिशिष्टम्

मूले टीकायां चोपन्यस्तानां गाथादीनामकारादिशः सूचि —

| गाथादिकम् | स्थलम् | पत्राङ्कि |
| --- | --- | --- |
| १ अन्यस्तासत्यपि ह्यर्थे० | [खण्डनखण्डखाद्ये परि० १ श्लो०११] | १०९, ५ |
| २ अत्र घाद्यानामावश्यकत्व | [तत्त्वार्थवृत्ति० अ० १ सू० ५] | ८६, १ |
| ३ 'अभेद् नोल्लिखन्ती धी० | [खण्डनखण्डखाद्ये परि० १ श्लो०१८] | ७१ १५ |
| ४ 'अर्थाना सर्वैकदेश०' | [तत्त्वार्थभाष्य०, अ० १ सू० ३५] | ११, ६ |
| ५ 'अथाभिधानप्रत्यया० | [ ] | ७१ ४ |
| ६ अर्पितानर्पितसिद्धे | [तत्त्वार्थ० अ० ५ सू० ३१] | ३०, २ |
| ७ 'असत्सर्गमहस्यापि० | [खण्डनखण्डखाद्ये परि०१ श्लो०१२] | १०९ २५ |
| ८ 'अहवा पच्चुप्पन्नो० | [विशेषावश्यकभाष्यगाथा २८३१] | १०५, ७ |
| ९ इच्छइ विसेसियतर० | [विशेषावश्यक नि०गाथा २१८४] | ११५, ५ |
| १० 'इन्द्रो मायाभि ०' | [बृहदारण्यकोपनिषद् २ ५ १८] | ७१ २१ |
| ११ उज्जुसुयस्स पगे०' | [अनुयोगद्वारसूत्र० १४] ३३-२ | ११३-७ |
| १२ उत्पादव्ययध्रौव्ययुक्त सत् | [तत्त्वार्थ० अ० ५ सू० २९] | ७३ १३ |
| १३ 'उप्पेइ वा विगमेइ वा धुवेइ वा | [ आगम ? ] | ३ १५ |
| १४ उप्पसो सोणओ०' | [विशेषावश्यक नि० गाथा-३५९२] | १२, १ |
| १५ 'ऋजुसूत्राद्०' | [नयोपदेशश्लो० ३४ ] | |
| १६ एकमेवाद्वितीय ब्रह्म० | [छान्दोग्योपनिषद् ६, २ १ ] | ७० २६ |
| १७ 'एग जीव जीवो ससारी० | [विशेषावश्यकभाष्यगाथा-२२५६ ] | १३३, ३ |
| १८ काशीमरणान्मुक्ति' | [श्रुति ? ] | ३, १८ |
| १९ विञ्चित् सिद्धमसिद्ध०' | [वाक्यपदीय० ] | |
| २० गुणपर्यायवद् द्रव्यम्' | [तत्त्वार्थ० अ० ५, सूत्र० ३७] | ७९, १३ |

२१ 'जत्थ चिय ण जाणिज्जा०' [अनुयोगद्वारसूत्र० ८ ] ७७, ३
२२ 'जीवो गुणपडिवन्नो०' [विशेषावश्यक नि० गाथा–२६४३] ८४,१;८६,५
२३ 'णामाइतियं दव्वट्ठियस्स०' [विशेषावश्यकभाष्यगाथा–७५ ] ८४, ८
२४ 'णेगेहिं माणेहिं०' [विशेषावश्यक नि० गाथा–२१८२ ] ७३, २
२५ 'तमेव विदित्वाऽतिमृत्युमेति०' [श्वेताश्वतरोपनिषद् ३, ८ ] ३, ११
२६ 'तिक्काले चदुपाणा०' [द्रव्यसङ्ग्रहगाथा–३ ] १३५, ३
२७ 'दासेन मे खरः क्रीतः०' [नयोपदेशश्लो० ५५ ] ३६, २
२८ 'द्वैताद् वै भयं भवति०' [श्रुति० ? ] ७१, १३
२९ 'नयाः प्रापकाः साधकाः०' [तत्त्वार्थभाष्य–अ० १, सूत्र० ३५ ] १०, १
३० 'नामं आवकहियं०' [अनुयोगद्वारसूत्र–११ ] ९२, ६
३१ 'निगमेषु येऽभिहिता.०' [तत्त्वार्थभाष्य० अ० १, सूत्र० ३५] ५३, ५
३२ 'परसमयकक्कोडि०' [विशे०आवश्यकभाष्यगाथा–२३१८] १४३,१
३३ 'पच्चुप्पण्णग्गाही०' [विशेषावश्यकनि० गाथा–२१८४] १०४, ७
३४ 'पलालं न दहत्यग्नि०' [नयोपदेशश्लो० ३१ ] १२७, ६
३५ 'प्रमाण-नयैरधिगम ' [तत्त्वार्थ० अ० १, सूत्र० ६ ] १२, ९
३६ 'भावं चिय सद्दनया०' [विशेषावश्यकभाष्यगाथा–२८४७] ८१,५;८५,१
३७ 'भागे सिंहो नरो भागे०' [ ] २१, २६
३८ 'मग्गणगुणठाणेहिं०' [द्रव्यसङ्ग्रहगाथा–१३] १६५, ९
३९ 'माया सती चेद्' [अन्ययोगव्यवच्छेदिकाश्लो० १३] ७२, २२
४० 'यत्रैव जनयेदेनां०' [ ] १०६, १२
४१ 'यथार्थाभिधानं शब्दः' [तत्त्वार्थभाष्य अ० १, सूत्र० ३५] ११३, ४
४२ 'यदा सर्वमात्मैवाभूत्०' [श्रुतिः ? ] ७१, [illegible]
४३ 'लौकिकसम उपचारप्रा०' [तत्त्वार्थभाष्यअ० १, सूत्र० ३५] ९९, ३
४४ 'वंजण-अत्थ-तदुभय०' [विशेषावश्यकनि० गाथा–२१८५] १३२, २
४५ 'वयइ विणिच्छियत्थं' [विशेषावश्यकनि० गाथा–२१८३] ९७, २

इति मुनिश्रीमहिमाप्रभविजयसङ्कलिता सूचि ॥

## शुद्धिपत्रम्

सविवरणस्य नयरहस्यप्रकरणस्य शुद्धिपत्रम्



| अशुद्धम् | शुद्धम् | पत्र पङ्क्ती | अशुद्धम् | शुद्धम् | पत्र पङ्क्ती |
|---|---|---|---|---|---|
| ०कम० | ०कर्म० | १,२४ | ०ह् प्र० | ०ह्-प्र० | ८ २५ |
| चक्र० | चक्षु० | २, ७ | ०दित० | ०दिति० | ८,२८ |
| नास्तिक० | नास्तिकै० | २,१६ | ०घम० | ०घर्म० | ८,२८ |
| ०धनाद्ध | ०धनार्द्ध | २ १९ | ०द्, अ० | ०द् अ० | ९,२७ |
| ०दीय० | ०दीण० | ३, ८ | उक्ष्य० | उक्तिवै० | १०,११ |
| ०सिद्ध० | सिद्धि० | ३ १७ | तत्वार्थ० | तत्त्वार्थ० | १० १२ |
| ०ध्यसार्थ | ०ध्यसार्थं | ४, ९ | ०दायका० | ०दायैका० | १०,१६ |
| ०म्, | ०म् । | ४ २७ | शृङ्ग | शृङ्गं | ११,१३ |
| ०स्यच | ०स्यैव | ५,९ | ०नयर० | ०नयैर० | १२,९ |
| ०तत्त्वाथ० | ०तत्त्वार्थ० | ५ २६ | ०तैकक० | ०तैकैक० | १२,१३ |
| ०माग० | ०मार्ग० | ५ २८ | ०तैकक० | ०तैकैक० | १२,१४ |
| ०थर्प० | ०र्थप० | ६,२ | कृत्योत्था० | कृत्योत्था० | १२,१५ |
| ०देऽथ | ०देऽर्थ | ७,६ | प्रमाण० | प्रमाणै० | १२,१७ |
| ०जन | ०जनम्, | ७,११ | ०योह० | ०योर्ह० | १३,२ |
| ०नम्, | ०नं | ७,११ | तभ्रान्त० | सम्भ्रान्त० | १३,६ |
| ०पय० | ०पर्य० | ७,१८ | ०प्रक्षे० | ०प्रतिक्षे० | १३ ८ |
| ०विपयो य० | ०विपय० | ८,१७ | ०चतुद० | ०चतुर्द० | १४ २ |
| ०सत्त्व | ०सत्त्वं | ८ २० | ०दीना० | ०दीना-० | १४ ६ |
| ०स्यवेति | ०स्यैवेति | ८,२५ | ०हित्वे० | ०हित्वे-० | १४,७ |
| ०तद्दिरा० | ०तद्दितरा० | ८ २५ | ०मृते | ०मूते | १४,१४ |

| | | |
|---|---|---|
| ०त्तामाध्य० | ०नामध्य० | १४,२७ |
| त्रिभिर्नि० | त्रिभिर्नि० | १५,१ |
| ०द्दिन० | ०द्दिने० | १५ ७ |
| ०दि द्धि० | ०द्दिद्धि० | १५ ११ |
| ०दि तृ० | ०दितृ० | १५,१२ |
| ०स्ययत्र० | ०स्यय० | १५ १४ |
| छित्य | छित्यं | १५,१५ |
| ०घम० | ०घर्म० | १५,१९ |
| भूत० | भूत० | १५,१९ |
| ०विक्क | ०विकं | १५,२२ |
| ०प्रत्तित्व० | ०पत्तित्व० | १६ १६ |
| ०त्या० | ०त्यतआ० | १६,२० |
| ०र्पद्दा० | ०र्प-द्दा० | १७ ३ |
| न, तद्० | न तद् ० | १७,१८ |
| ०कड्डत्व० | ०कड्डकत्व० | १७ १९ |
| ०तत्र | ०यत्र | १८,१ |
| ०धुय० | ०धुर्य० | १८,२४ |
| ०द्दोप० | ०दोपोप० | १९ ६ |
| ०तम् का० | ०तमिति का० | १९ १५ |
| ०त्मेया० | ०त्त्यमेया० | १९,२६ |
| ०यिकारि० | ०कारि० | २०,२ |
| ०ति, स० | ०ति स० | २०,२२ |
| ०विभागा० | ०विभिन्नभागा० | २१,२४ |
| ०पर्यायो० | ०पर्यायियो० | २२,२३ |
| ०औप० | ०औपा० | २३,८ |
| ०तैकवो० | ०तैकत्ववो० | २४ ७ |
| ,, | ,, | २५ ५ |
| ०दकस्यमकार० | ०दकस्वप्रकारक० | २५,१६ |
| ०प्रैनेक० | ०प्रे नैक० | २७,१४ |
| ०नय ० | ०नय० | २७,२५ |
| ०केनै० | ०कैणै० | २८,१ |
| ०यात्मत्वं | ०यात्मकत्वं | २८,११ |
| ०स्तम । | ०स्तम्, | २९,३ |
| ०द्दित० | ०द्दिति० | २९,४ |
| ०थ । | ०थं । | २९,७ |
| ०लक्षणाव० | ०लक्षणावच्छे काव० | २९,१३ |
| ०यैक० | ०यैकत्य० | २९,१५ |
| ०न्ध | ०न्धः, | २९,१९ |
| दृष्ट० | दृष्टि० | ३०,२६ |
| ०मानात्वगाही | ०मानग्राही | ३१,११ |
| ०भ्युप० | ०स्युपै० | ३१,१८ |
| ०र्माया: । स | ०र्माय, स | ३१,२३ |
| ०द्;, । | ०द् । | ३१,२४ |
| मो० | भावामो० | ३२,६ |
| ०सौवसा० | ०सौसा० | ३२,१४ |
| ०तरांश० | ०तरांश० | ३२,२३ |
| ०मस्य । पच | ०मस्य, पवं | ३३,८ |
| ०त्वतु० | त्वतुप० | ३४,५ |
| नैगम० | "नैगम० | ३५,२० |
| ०द्द० | ०द्दा० | ३५,२० |
| ०नया | नयाः" [त० १,३४] | ३५,२० |
| ०नाम् | नाम् । | ३६,१० |
| ०ति । | ०ति, | ३६,१० |

| | | |
|---|---|---|
| ॰मेव | ॰मेव | ३६,१६ |
| ॰प्रकारवु॰ | ॰प्रकारफवु॰ | ३९,३ |
| तत् | तत्, | ३९,५ |
| चेति | चेति- | ३९,२४ |
| ॰त्य प्र॰ | त्वं प्र॰ | ४०,६ |
| ॰दि दि॰ | ॰दिदि॰ | ४०,१९ |
| ॰शयति॰ | ॰र्शयति | ४२,१० |
| वाह्मणे | ब्राह्मणे | ४३,७ |
| ॰नार्थं | ॰नार्थं | ४४,१४ |
| ॰शुद्ध॰ | ॰शुद्ध॰ | ४४,२३ |
| ॰किया॰ | ॰क्रिया॰ | ४५,१६ |
| ॰रूपैय | ॰रूपैय | ४५,२७ |
| ॰तुल्या॰ | ॰तुल्या॰ | ५०,२४ |
| ॰स्वं | स्व | ५०,२७ |
| ॰हीनां | ॰हीनां शुद्धत्वं | ५१,११ |
| ॰तील्यु॰ | तीरथाद्यु॰ | ५१,१७ |
| याकृते | याकृते- | ५१,२० |
| नाहि॰ | न हि | ५३,१ |
| नही॰ | न ही॰ | ५३,७ |
| ॰पेयते | ॰पेयते- | ५४,२४ |
| ॰मिशेपुं॰ | ॰मिश्रे पु॰ | ५७,११ |
| क्षयपथ | यत पथ | ५७,१५ |
| ॰न्यतवि॰ | ॰न्यावि॰ | ६०,१३ |
| ॰परिमाण॰ | ॰परिणाम॰ | ६६,२ |
| ॰अनकान्ताया अनु॰ | ॰अनकताऽनु॰ | ६६,११ |
| ॰कम्। | कम्, | ६३,३ |
| पवं | एवम् | ७०,२६ |
| ॰पटवुद्धया | ॰पटमेदवुद्धया | ७०,२७ |
| ॰पटमेदैः | ॰पट-मेदैः | ७१,३ |
| सिद्ध॰ | सिद्धय॰ | ७१,७ |
| मिणइत्ती | मिणइ त्ती | ७३,२ |
| ॰अम्त॰ | ॰अनन्त॰ | ७३,१८ |
| ॰गाढी॰ | ॰ग्राह्ही॰ | ७३,१९ |
| विपयत्वम् | विपयत्वम्, | ७३,२१ |
| पुनः | पुनः, | ७५,१० |
| ॰परिणाम॰ | ॰परिमाण॰ | ७६,१ |
| निक्षेपेत् | निक्षिपेत् | ७७,१६ |
| ॰माः | ॰मा | ७७,२० |
| ॰मप॰ | ॰मुप॰ | ७८,५ |
| ॰द्रव्य-॰ | ॰द्रव्य॰ | ७८,१४ |
| ॰कार॰ | ॰कारण॰ | ७८,१८ |
| तद्ध॰ | स्वद्ध॰ | ८०,६ |
| द्रव्यमिति | जीवद्रव्य इति | ८०,१३ |
| ॰नयेस्यैति | ॰नयस्येति | ८०,२० |
| ॰तयाद्र॰ | ॰तया द्र॰ | ८३,१३ |
| ॰णा प्र॰ | ॰णप्र॰ | ८६,९ |
| ॰पृष्ठा॰ | ॰पृष्ठा॰ | ८७,१० |
| ॰नविशेष॰ | ॰न विशेष॰ | ९०,२३ |
| ॰सदै॰ | ॰सदे॰ | ९१,२० |
| नास्नि | नास्नि | ९३,५९ |
| ॰मिति" | ॰म्" इति | ९४,६ |
| इति, | इति- | ९४,१९ |
| ॰स्थापना॰ | ॰स्थापन॰ | ९५,९ |

| | | | | | |
|---|---|---|---|---|---|
| व्यहारः | व्यवहार॰ | ९७,१ | ॰त्येत्वे॰ | ॰त्येवे॰ | १११,३० |
| ॰स्यापला॰ | स्याप्यपला॰ | ९७,२७ | । | , | ११२,२ |
| ॰हार | हारः, | ९९,२ | । | , | ११२,३ |
| ॰पात्य॰ | ॰पात्व-॰ | ९९,२ | । | , | ११२,५ |
| ॰स्याप्ये॰ | स्याभावेऽप्ये | ९९,१० | ॰ह्रसः | ह्रासतः | ११२,५ |
| ॰पर्यात् | ॰पर्यात्, | १००,१ | ॰पोपाद॰ | ॰पोत्पाद॰ | ११२,५ |
| ॰वस्य॰ | घस्य॰ | १००,१९ | घटा॰ | ॰घट | ११२,१० |
| न हि | नहि | १०४,१ | ॰इर्थ॰ | इर्थं | ११४,१९ |
| ॰नात्ती॰ | नानत्ती॰ | १०५,५ | ॰तर | तर॰ | ११५,२७ |
| ॰ना ती॰ | ना नती॰ | १०५,९ | समभिरुढस्य | साम्प्रतस्य | ११६,१० |
| ॰व्याप्य पव | ॰व्याप्यमेव | १०५,१८ | , | । | ११७,७ |
| ॰ऽतीत॰ | ॰ऽनतीत॰ | १०५,१९ | इदन्त्व॰ | इदन्त्व-॰ | ११७,७ |
| ॰गताज्ञान॰ | ॰गताकार-ज्ञान॰ | १०६,९ | पव | पव, | ११८,१ |
| ॰सूत्रं | ॰सूत्र॰ | १०६,२७ | कुम्भः, | कुम्भ | ११८,२ |
| ॰मित्यर्थः | ॰इत्यर्थः | १०६,२८ | तथा | तथा | ११८,१३ |
| तद्मपि | तमपि | १०७,१२ | कुम्भः । | ॰कुम्भ | ११८,१६ |
| ॰ताता॰ | ॰तमना॰ | १०७,१७ | नन्वेव | न चैवं | ११९,१ |
| ॰गमो वि॰ | ॰गमोऽवि॰ | १०७,२३ | स्वपरो॰ | स्व परो॰ | ११९,४ |
| । | ! | १०८,६ | ॰शङ्कते | ॰शङ्क्य | ११९,१२ |
| संशी॰ | शंस॰ | १०९,२५ | नन्वे॰ | निषेधति-न चै॰ | ११९,१३ |
| । | , | ११०,२ | समाधत्ते | निषेधहेतु-माह | ११९,१६ |
| ॰साथ॰ | ॰सार्थ॰ | ११०,७ | । | । | १२०,२ |
| भान | मानधर्मो-माव | ११०,१६ | ॰स्वपर॰ | ॰स्व पर॰ | १२०,३ |
| नोमयथा॰ | उमयथा॰ | ११०,२८ | । | , | १२०,५ |
| ॰दित्यध | ॰दित्यर्थः | १११,१६ | ॰त्वस्य॰ | ॰त्वस्यं॰ | १२०,१० |

| | | |
|---|---|---|
| ०स्वपर० | ०स्व-पर० | १२०,१६ |
| ०तस्ये० | ०तस्यै० | १२०,२३ |
| । | , | १२१,१ |
| ०पदेम- | ०पदेन | १२१,१ |
| स्व० | स्व पर० | १२१,२ |
| ञ्चकुम्भ० | च कुम्भ | १२१,४ |
| । | , | १२२,१ |
| सद्भावेन | सद्भावे | १२२,१८ |
| ०फलनाय | कलनीय | १२२ १९ |
| वक्तव्य० | वक्तव्यत्व० | १२२,२५ |
| ०सिद्धय० | सिद्धय | १२३,९ |
| ०गमयम० | गमेऽ० | १२३,९ |
| ०ऽ० | ०ऽपि | १२३,११ |
| पर० | अपर० | १२३,२७ |
| । | , | १२४,४ |
| स्वपर० | स्वपरोभय० | १२४ ७ |
| योधात् | तथावोधाद् | १२४ १० |
| ०द्वि गा० | ०द्विगा० | १२०,१२ |
| तथाहि | तथाहि- | १२०,१३ |
| विकल्प० | विकल० | १२६,१२ |
| देशा', | देशाः | १२६,१३ |
| , | । | १२६,२८ |
| संभ० | मंक० | १२८,२ |
| ०रुद्धेत्ति | ०रुद्धे"त्ति | १२८,२ |
| ०रधुन० | धर्मेवाम्धुर० | १२८,७ |
| ०धर्मेदातम् | तम् | १२८,८ |
| ०पेक्षया० | ०पेक्षाया० | १२८,१७ |
| ग्रहि० | गृही | १२९,२ |
| ०रेणव | ०रेणैव | १२९,१३ |
| ०पद् | ०पदं | १२९,२६ |
| ०च्चोपका० | ०त्तपुरस्का० | १३१,२ |
| घट-० | घट० | १३२,७ |
| ० | - | १३३,५ |
| ०सम० | ०-सम० | १३३,६ |
| ०हितः | ०हित इति | १३३ |
| ०क्षायो० | क्षायो० | १३३, |
| ०देश० | ०देश-० | १३४,४ |
| च द्रु | चद्रु | १३५,३ |
| ०पाप्पा | ०पाणो | १३५,३ |
| ०द्लय | ०दसहि | १३५,९ |
| चह्नौ | चत्वारः | १३५,१६ |
| ०प्राणौ च | ०प्राणश्च | १३५,१७ |
| ०ताद्धेचेतने | ०तोद्धेचेतने | १३५,१८ |
| इति | इति- | १३५,२० |
| ०रागस्य- | ०रागस्य | १३५,२० |
| ०दर्शौ च | दर्शभिः | १३५,२२ |
| ०नया | नयात् | १३५,२२ |
| ०नयाः | नयात् | १३५,२३ |
| ०पर्दि० | ०पद्दि० | १३८,१० |
| ०मान | मानं | १३८,१५ |
| ०नाप० | ०न प० | १३९,२१ |
| ०मतं | ०मतं कारणं | १४१,१० |
| ०प्य० | ०ध्यं | १४१,१७ |
| तथा | तथाऽपि | १४३,२० |

